जयवल्लभं नाम वज्जालग्गं

संस्कृतच्छायासंवलितम् ।

Vajjalaggam,
A work on Rhetoric.
by
Prof Julius Laber.

... पणमिऊण सुयदेविं ।
धम्माइतिवग्गजुयं सुयणाण सुहासियं वोच्छं ॥ १ ॥
अपय पाइयकव्वं पढिउं सोउं च जे न-याणन्ति ।
... ॥

... ॥

... वज्जालग्ग विहिणा जयवल्लहं नाम ॥ ३ ॥
एक्कत्थे पत्थावे जत्थ पढिज्जन्ति पउरगाहाओ ।
तं खलु वज्जालग्गं वज्ज त्ति य पद्धई भणिया ॥ ४
एयं वज्जालग्गं सव्वं जो पढइ अवसरम्मि सया ।
पाइयकव्वकई सो होहिइ तह कित्तिमन्तो य ॥ ५

## सोयारवज्जा ।

दुक्खं कीरइ कव्वं कव्वम्मि कए पउञ्जणा दुक्खं ।
सन्ते पउञ्जमाणे सोयारा दुल्लहा होन्ति ॥ ६ ॥
सक्कयसक्कयं पि ... अत्थो सोयारसङ्गमवसेण ।
...पुव्वरमविसेस जणेइ जं तं महच्छरियं ॥ ७ ॥
... सुघडियं ।
... होइ ॥ ८ ॥

## गाहावज्जा ।

अद्धक्खरभणियाइं नूणं सविलासमुद्धहसियाइं ।
अद्धच्छिपेच्छियाइं गाहाहि विणा न नज्जन्ति ॥ ९ ॥

सर्वज्ञवदनपङ्कजनिवासिनीं प्रणम्य श्रुतदेवीं।
धर्मादित्रिवर्गयुतं सुजनानां सुभाषितं वक्ष्यामि ॥ १ ॥
अमृतं प्राकृतकाव्यं पठितुं श्रोतुं च न जानन्ति।
कामस्य तत्त्ववार्त्तां कुर्वन्ति ते कथं न लज्जन्ति ॥ २ ॥
विविधकविविरचितानां गाथानां वरकुलानि गृहीत्वा।
रचितं वज्जालग्गं विधिना जयवल्लभं नाम ॥ ३ ॥
एकार्थे प्रस्तावे यत्र पठ्यन्ते प्रचुरगाथाः।
तत्खलु वज्जालग्गं वज्जेति च पद्धतिर्भणिता ॥ ४ ॥
इदं वज्जालग्गं सर्वं यः पठत्यवसरे सदा।
प्राकृतकाव्यकविः स भविष्यति तथा कीर्तिमांश्च ॥ ५ ॥

## श्रोतृपद्धतिः।

दुःखं क्रियते काव्यं काव्ये कृते प्रयुज्यमानो दुःखं।
सति प्रयुज्याने श्रोतारो दुर्लभा भवन्ति ॥ ६ ॥
संस्कृतमसंस्कृतमपि खल्वर्थः श्रोतृसङ्गमवशेन।
अपूर्वरसविशेषं जनयति यत्तन्महाश्चर्यं ॥ ७ ॥
मुक्ताफलमिव काव्यं स्वभावविमलं सुवर्णसंघटितं।
श्रोतृकर्णकुहरे प्रकटितं प्रकटं भवति ॥ ८ ॥

## गाथापद्धतिः।

अर्धाक्षरभणितानि नूनं सविलासमुग्धहसितानि।
अर्धाक्षिप्रेक्षितानि गाथाभिर्विना न ज्ञायन्ते ॥ ९ ॥

सालङ्काराहि सलक्खणाहि अन्नन्नरायरसियाहिं ।
गाहाहि पणइणीहि य खिज्जइ चित्तं अइन्तीहिं ॥ १० ॥
एयं चिय नवरि फुडं हिययं गाहाण महिलियाणं च ।
अणरसिएहि न लब्भइ दविणं व विहीणपुण्णेहिं ॥ ११ ॥
सच्छन्दिया सरूवा सालङ्कारा य सरसउल्लावा ।
वरकामिणि व्व गाहा गाहिज्जन्ती रसं देइ ॥ १२ ॥
गाहाण रसा महिलाण विब्भमा कइयणाण उल्लावा ।
कस्स न हरन्ति हिययं बालाण य मम्मणुल्लावा ॥ १३ ॥
सव्वो गाहाउ जणो वीसत्थो भणइ सव्वगोट्ठीसु ।
परमत्थो जो ताणं सो नाओ मइकइन्देहिं ॥ १४ ॥
गाहा रुवइ वराई सिक्खिज्जन्ती गवारलोएहिं ।
कीरइ लुञ्चपलुञ्चा जह गाई मन्ददोहेहिं ॥ १५ ॥
गाहे भज्जिहिसि तुमं अहवा लहुयत्तणं पि पाविहिसि ।
गामारदन्तदिढकढिणपीडिया उच्छुलट्ठि व्व ॥ १६ ॥
गाहाणं गीयाणं तन्तीसद्दाण पोढमहिलाणं ।
ताणं चिय सो दण्डो जे ताण रसं न-याणन्ति ॥ १७ ॥
छन्दं अयाणमाणेहि जा किया सा न होइ रमणिज्जा ।
किं गाहा अह सेवा अहवा गाहा वि सेवा वि ॥ १८ ॥

## कव्ववज्जा ।

चिन्तामन्दरमन्थाणमन्थिए वित्थरम्मि अत्थाहे ।
उप्पज्जन्ति कईहिययसायरे कव्वरयणाइं ॥ १९ ॥

सालङ्काराभिः सलक्षणाभिरन्योन्यरागरसिताभिः।
गाथाभिः प्रणयिनीभिश्च खिद्यते चित्तमनागच्छन्तीभिः॥१०॥
एतदेव केवलं स्फुटं हृदयं गाथानां महिलानां च।
अरसिकैर्न लभ्यते द्रविणमिव विहीनपुण्यैः॥११॥
सच्छन्दिता सरूपा सालङ्कारा च सरसोल्लापा।
वरकामिनीव गाथा पठ्यमानानुभूयमाना च रसं ददाति॥१२॥
गाथानां रसा महिलानां विभ्रमा कविजनानामुल्लापाः।
कस्य न हरन्ति हृदयं बालानां च मन्मनोल्लापाः॥१३॥
सर्वा गाथा जनो विश्वस्तो भणति सर्वगोष्ठीषु।
परमार्थो यस्तासां स ज्ञातो महाविदग्धैः॥१४॥
गाथा रोदिति वराकी शिक्ष्यमाणा ग्रामीणलोकैः।
क्रियते कुब्जप्रकुब्जा यथा गोर्मन्ददोग्धृभिः॥१५॥
गाथे भङ्क्ष्यसे त्वमथवा लघुत्वमपि प्राप्स्यसि।
ग्रामीणदन्तदृढकठिनपीडिता इक्षुयष्टिरिव॥१६॥
गाथानां गीतानां तन्त्रीशब्दानां प्रौढमहिलानां।
तेषामेव स दण्डो ये तेषां रसं न जानन्ति॥१७॥
छन्दोऽजानद्भिर्या कृता सा न भवति रमणीया।
किं गाथाथ सेवाथवा गाथापि सेवापि॥१८॥

## काव्यपद्धतिः।

चिन्तामन्दरमन्थानमथिते विस्तरेऽगाधे।
उत्पद्यन्ते कविहृदयसागरे काव्यरत्नानि॥१९॥

रयणुज्जलपयसोहं तं कव्वं जं तवेइ पडिवक्खं ।
पुरिसायन्तविलासिणि— रसणादामं मिव रसन्तं ॥ २० ॥
पाइयकव्वम्मि रसो जो जायइ तह व छेयभणिएहिं ।
उययस्स य वासियसीयलस्स तित्तिं न वच्चामो ॥ २१ ॥
छन्दकहवि रएइ पयं मग्गं पुलएइ छेयमारुहइ ।
चोरो व्व कई अत्थं घेत्तूण कहवि निव्वहइ ॥ २२ ॥
सद्दावसद्दभीरू पए पए किंपि किंपि चिन्तन्तो ।
दुक्खेहि कहवि पावइ चोरो अत्थं कई कव्वं ॥ २३ ॥
सद्दपलोट्टं दोसेहि वज्जियं सुललियं फुडं महुरं ।
पुसेहि कहवि पावइ छन्दे कव्वं कलत्तं च ॥ २४ ॥
अणवरयवहलरोमञ्चकञ्चुयं जणियजणमणाणन्दं ।
जं न धुणावइ सीसं कव्वं पेम्मं च किं तेण ॥ २५ ॥
सो सोहइ दूसन्तो कइयणरइयाइ विविहकव्वाइं ।
जो भञ्जिऊण कुवयं अन्नपयं सुन्दरं देइ ॥ २६ ॥
अत्थक्को रसरहिओ देसविहूणो णणासिओ तुरिओ ।
मुहवञ्चणो विराओ एए दोसा पढन्तस्स ॥ २७ ॥
देसियसद्दपलोट्टं महुरक्खरछन्दसंठियं ललियं ।
फुडवियडपायडत्थं पाइयकव्वं पढेयव्वं ॥ २८ ॥
ललिए महुरक्खरए जुवईयणवल्लहे ससिङ्गारे ।
सन्ते पाइयकव्वे को सक्कइ सक्कयं पढिउं ॥ २९ ॥
अबुहा बुहाण मज्झे पढन्ति जे छन्दलक्खणविहूणा ।
ते भमुहाखग्गनिवाडियं पि सीसं न लक्खन्ति ॥ ३० ॥

रसोज्ज्वलपदशोभं तत्काव्यं यत्तापयति प्रतिपक्षं ।
पुरुषार् ानविलासिनीरशनादामेव रसन्तं ॥ २० ॥
प्राकृतकाव्ये रसो यो जायते तथा वा छेकभणितैः ।
उदकस्य च वासितशीतलस्य तृप्तिं न व्रजामः ॥ २१ ॥
कथंकथमपि रचयति पदं मार्गं प्रलोकयति (च्छेकं) छेदमारोहति
चोर इव कविरर्थं गृहीत्वा कथमपि निर्वहति । २२ ॥
शब्दापशब्दभीरुः पदे पदे किमपि किमपि चिन्तयन् ।
दुःखैः कथमपि प्राप्नोति चोरोऽर्थं कविः काव्यं ॥ २३ ॥
शब्दपर्यस्तं दोषैर्वर्जितं सुललितं स्फुटं मधुरं ।
पुण्यैः कथमपि प्राप्नोति छन्दसि काव्यं कलत्रं च । २४ ॥
अनवरतबहुलरोमाञ्चकञ्चुकं जनितजनमनआनन्दं ।
यन्न धूनयते शीर्षं काव्यं प्रेम च किं तेन ॥ २५ ।
स शोभते दूषयन् कविजनरचितानि विविधकाव्यानि ।
यो भङ्क्त्वा कुपदमन्यत्पदं सुन्दरं ददाति ॥ २६ ॥
अखिन्नो रसरहितो देशविहीनोऽननुनासिकस्वरितः ।
मुखावञ्चनो विराग एते दोषाः पठतः ॥ २७ ॥
देशीशब्दपर्यस्तं मधुराक्षरच्छन्दःसंस्थितं ललितं ।
स्फुटविकटप्रकटार्थं प्राकृतकाव्यं पठनीयं ॥ २८ ॥
ललिते मधुराक्षरे युवतिजनवल्लभे सशृङ्गारे ।
सति प्राकृतकाव्ये कः शक्नोति संस्कृतं पठितुं ॥ २९ ॥
अबुधा बुधानां मध्ये पठन्ति ये छन्दोलक्षणविहीनाः ।
ते भ्रूखड्गनिपातितमपि शीर्षं न लक्षयन्ति ॥ ३० ॥

*पाइयकव्वस्स नमो पाइयकव्वं च निम्मियं जेण ।*
ताहं चिय पणमामो पढिऊण य जे वियाणन्ति ॥ २१ ॥

## सज्जणवज्जा ।

मइणम्मि ससी मइणम्मि सुरतरू मइणसंभवा लच्छी ।
सुयणो उण कहसु महं न-याणिमो कत्थ संभूओ ॥ २२ ॥
सुयणो सुद्धसहावो मइलिज्जन्तो वि दुज्जणयणेण ।
छारेण दप्पणो विय अहिययरं निम्मलो होइ ॥ २३ ॥
सुयणो न कुप्पइ च्चिय अह कुप्पइ मङ्गुलं न चिन्तेइ ।
अह चिन्तेइ न जम्पइ अह जम्पइ लज्जिरो होइ ॥ २४ ॥
दढरोसकलुसियस्स वि सुयणस्स मुहाउ विप्पियं कत्तो ।
राहुमुहम्मि वि ससिणो किरणा अमयं चिय मुयन्ति ॥ २५
दिट्ठा हरन्ति दुक्खं जम्पन्ता देन्ति सयलसोक्खाइं ।
एयं विहिणा सुकयं सुयणा जं निम्मिया भुवणे ॥ २६ ॥
न हसन्ति परं न थुणन्ति अप्पयं पियसयाइ जम्पन्ति ।
एसो सुयणसहावो नमो नमो ताण पुरिसाणं ॥ २७ ॥
अकए वि कए वि पिए पियं कुणन्ता जयम्मि दीसन्ति ।
कयविप्पिए वि हु पियं कुणन्ति ते दुल्लहा सुयणा ॥ २८ ॥
सव्वस्स एह पयई पियम्मि उप्पाइए पियं काउं ।
सुयणस्स एह पयई अकए वि पिए पियं काउं ॥ २९ ॥
फरुसं न भणसि भणिओ वि हससि हसिऊण जम्पसि पियाइं ।
सज्जण तुज्झ सहावो न-याणिमो कस्स सारिच्छो ॥ ४० ॥

*प्राकृतकाव्याय नमः प्राकृतकाव्यं च निर्मितं येन ।*
तेभ्य एव प्रणमामः पठितुं च ये विजानन्ति ॥ ३१ ॥

## सज्जनपद्धतिः ।

मथने शशी मथने सुरतरुर्मथनसम्भवा लक्ष्मीः ।
सुजनः पुनः कथय मम न जानीमः क्व सम्भूतः ॥ ३२ ॥
सुजनः शुद्धस्वभावो मलिनीक्रियमाणोऽपि दुर्जनजनेन ।
क्षारेण दर्पण इवाधिकतरं निर्मलो भवति ॥ ३३ ॥
सुजनो न कुप्यत्येवाथ कुप्यति पापं न चिन्तयति ।
अथ चिन्तयति न जल्पत्यथ जल्पति लज्जितो भवति ॥ ३४ ॥
दृढरोषकलुषितस्यापि सुजनस्य मुखाद् विप्रियं कुतः ।
राहुमुखेऽपि शशिनः किरणा अमृतमेव मुञ्चन्ति ॥ ३५ ॥
दृष्टा हरन्ति दुःखं जल्पन्तो ददति सकलसौख्यानि ।
एतद्विधिना सुकृतं सुजना यन्निर्मिता भुवने ॥ ३६ ॥
न हसन्ति परं न स्तुवन्त्यात्मानं प्रियशतानि जल्पन्ति ।
एष सुजनस्वभावो नमो नमस्तेभ्यः पुरुषेभ्यः ॥ ३७ ॥
अकृतेऽपि कृतेऽपि प्रिये प्रियं कुर्वन्तो जगति दृश्यन्ते ।
कृतविप्रियेऽपि खलु प्रियं कुर्वन्ति ते दुर्लभाः सुजनाः ॥ ३८ ॥
सर्वस्यैषा प्रकृतिः प्रिय उत्पादिते प्रियं कर्तुं ।
सुजनस्यैषा प्रकृतिरकृतेऽपि प्रिये प्रियं कर्तुं ॥ ३९ ॥
परुषं न भणसि भणितो ऽपि हससि हसित्वा जल्पसि प्रियाणि ।
सज्जन तव स्वभावो न जानीमः कस्य सदृक्षः ॥ ४० ॥

नेच्छसि परयवयारं　　परउवयारं च निच्चमावहसि।
अवराहेहि न कुप्पसि　　सुयण नमो तुह सुहावस्स ॥ ४१ ॥
दोहिं चिय पज्जत्तं　　बहुएहि वि किं गुणेहि सुयणस्स।
विज्जुप्फुरिओ रोसो　　मित्ती पाहाणरेह व्व ॥ ४२ ॥
रे रे कलिकालमहा — गइन्दगलगज्जियस्स को कालो।
अज्ज वि सुपुरिसकेसरि — किसोरचलणङ्किया पुहवी ॥४३॥
दीणं अब्भुद्धरिउं　　पत्ते सरणागए पियं काउं।
अवरद्धेसु वि खमिउं　　सुयणो च्चिय नवरि जाणेइ ॥ ४४ ॥
बे पुरिसा धरइ धरा　　अहवा दोहिं पि धारिया धरणी।
उवयारे जस्स मई　　उवयरियं जो न पम्हुसइ ॥ ४५ ॥
पडिवज्जन्ति न सुयणा　　अह पडिवज्जन्ति कहवि दुक्खेहिं।
पत्थररेह व्व समा　　मरणे वि न अन्नहा होइ ॥ ४६ ॥
सेला चलन्ति पलए　　मज्जायं सायरा वि मेल्लन्ति।
सुयणा तहिं पि काले　　पडिवन्नं नेय सिढिलन्ति ॥ ४७ ॥
चन्दणतरु व्व सुयणा　　फलरहिया जइ वि निम्मिया विहिणा।
तह वि कुणन्ति परत्थं　　निययसरीरेण लोयस्स ॥ ४८ ॥

## दुज्जणवज्जा।

हययदुज्जणस्स वयणं　　निरन्तरं बहलकज्जलच्छायं।
संकुड्डं भिउडिजुयं　　कयावि न हु निम्मलं दिट्ठं ॥ ४९ ॥
थद्धो वङ्कग्गीवो　　अवट्ठिओ विसमदिट्ठिदुप्पेच्छो।
अहिणवरिद्धि व्व खलो　　सुलाहिसु व्व पडिहाइ ॥ ५० ॥

नेच्छसि परापकारं परोपकारं च नित्यमावहसि ।
अपराधैर्न कुप्यसि सुजन नमस्तव स्वभावाय ॥ ४१ ॥

द्वाभ्यामेव पर्याप्तं बहुभिर्गुणैरपि किं सुजनस्य ।
विद्युत्स्फुरितो रोषो मैत्री पाषाणरेखेव ॥ ४२ ॥

रे रे कलिकालमहागजेन्द्रगलगर्जितस्य कः कालः ।
अद्यापि सुपुरुषकेसरिकिशोरचरणाङ्किता पृथ्वी ॥ ४३ ॥

दीनमभ्युद्धर्तुं प्राप्ते शरणागते प्रियं कर्तुं ।
अपराद्धेष्वपि क्षमितुं सुजन एव केवलं जानाति ॥ ४४ ॥

द्वौ पुरुषौ धरतु धराथवा द्वाभ्यामपि धारिता धरणी ।
उपकारे यस्य मतिर्यश्चोपकृतं न विस्मरति ॥ ४५ ॥

प्रतिपद्यन्ते न सुजना अथ प्रतिपद्यन्ते कथमपि दुःखैः ।
प्रस्तररेखेव समा मरणेऽपि नान्यथा भवति ॥ ४६ ॥

शैलाश्चलन्ति प्रलये मर्यादां सागरा अपि मुञ्चन्ति ।
सुजनास्तस्मिन्नपि काले प्रतिपन्नं नैव शिथिलयन्ति ॥ ४७ ॥

चन्दनतरुरिव सुजनाः फलरहिता यद्यपि निर्मिता विधिना ।
तथापि कुर्वन्ति परार्थं निजकशरीरेण लोके ॥ ४८ ॥

## दुर्जनपद्धतिः ।

हतदुर्जनस्य वदनं निरन्तरं बहलकज्जलच्छायं ।
संक्रुद्धं भ्रुकुटियुतं कदापि न खलु निर्मलं दृष्टं ॥ ४९ ॥

स्तब्धो वक्रग्रीवोऽवाञ्छितो विषमदृष्टिदुःप्रेक्ष्यः ।
अभिनवर्द्धिरिव खलः शूलाभिन्न इव प्रतिभाति ॥ ५० ॥

नहमासभेयजणणो दुमुहओ अत्थिखण्डणसमत्थो ।
तह वि हु मज्झावलिओ नमइ खलो नहरणसरिच्छो ॥ ५१ ॥
अकुलीणो दोमुहओ ता मऊरो भोयणं मुहे जाव ।
मुरउ व्व खलो जिणम्मि भोयणे विरसमारसइ ॥ ५२ ॥
निद्धओ गुणरहिओ ठाणविमुक्को य लोहसंभूओ ।
विन्धइ जणस्स हिययं पिसुणो बाणु व्व लग्गन्तो ॥ ५३ ॥
जम्मे वि जं न हूयं न हु होसइ जं च जम्मलक्खे वि ।
तं जम्पन्ति तह च्चिय पिसुणा जह होइ सारिच्छं ॥ ५४ ॥
गुणिणो गुणेहि विहवेहि विहविणो होन्तु गव्विया नाम ।
दोसेहि नवरि गव्वो खलाण मग्गो च्चिय अउव्वो ॥ ५५ ॥
मन्तं न देन्ति वारन्ति देन्तयं दिन्नयं पि हारन्ति ।
अणिमित्तवइरियाणं खलाण मग्गो च्चिय अउव्वो ॥ ५६ ॥
परविवरलद्धलक्खे चिन्तलिए भीसणे जमलजीहे ।
वङ्कपरिसक्किरे गोणसे व्व पिसुणे मुहं कत्तो ॥ ५७ ॥
असमत्थमन्ततन्ताण कुलविमुक्काण भोयहीणाणं ।
दिट्ठाण को न बीहइ विन्तरसप्पाण व खलाणं ॥ ५८ ॥
एयं चिय बहुलाहो जीविज्जइ जं खलाण मज्झम्मि ।
लाहो जं न डसिज्जइ भुयङ्गपरिवेढिए चलणे ॥ ५९ ॥
न सहइ अब्भत्थणियं असइ गयाणं पि पिट्ठिमंसाइं ।
दट्ठूण भासुरमुहं खलसीहं को न बीहेइ ॥ ६० ॥
मा वच्चह वीसम्भं पसुहे बहुकूडकवडभरियाणं ।
निव्वत्तियकज्जपरम्मुहाण सुणयाण व खलाणं ॥ ६१ ॥

नखमांसभेदजननो दुर्मुखोऽस्थिखण्डनसमर्थः ( अस्थि० ) ।
तथापि खलु चित्तवक्रो (मध्यावलितो) नमत खलो नखिसदृचः॥५१॥
अकुलीनो द्विमुखस्तावन्मधुरो भोजनं मुखे यावत् ।
मुरज इव खलो जीर्णे भोजने विरसमारसति ॥ ५२ ॥
निर्धर्मो गुणरहितः त्राणविमुक्तश्च लोभसंभूतः ( लोह० ) ।
विध्यति जनस्य हृदयं पिशुनो बाण इव लगन् ॥ ५३ ॥
जन्मन्यपि यन्न भूतं न खलु भविष्यति यच्च जन्मलचेऽपि ।
तज्जल्पन्ति तथैव पिशुना यथा भवति सदृचं ॥ ५४ ॥
गुणिनो गुणैर्विभवैर्विभविनो भवन्तु गर्विता नाम ।
दोषैर्नवरं गर्वः खलानां मार्ग एवापूर्वः ॥ ५५ ॥
न स्वं ददाति वारयन्ति ददतं दत्तमपि हारयन्ति ।
अनिमित्तवैरिणां खलानां मार्ग एवापूर्वः ॥ ५६ ॥
परविवरलब्धलचे नानाचित्ते ( चित्रले ) भीषणे यमलजिह्वे ।
वक्रगमनशीले गोनस इव पिशुने सुखं कुतः ॥ ५७ ॥
असमर्थमन्त्रतन्त्रेभ्यः कुलविमुक्तेभ्यो भोगहीनेभ्यः ।
दृष्टेभ्यः को न बिभेति व्यन्तरसर्पेभ्य इव खलेभ्यः ॥ ५८ ॥
एतदेव बहुलाभो जीव्यते यत्खलानां मध्ये ।
लाभो यन्न दृश्यते भुजङ्गपरिवेष्टिते चरणे ॥ ५९ ॥ [पृष्ठमांसानि ।
न सहतेऽभ्यर्थनं (अभ्रस्तनितं) अश्नाति गतानामपि (गजानामपि)
दृष्ट्वा भासुरमुखं खलमिदं को न बिभेति ॥ ६० ॥
मा व्रजत विश्रम्भं प्रमुखे बहुकूटकपटभृतानां ।
निर्वर्तितकार्यपराङ्मुखानां शुनकानामिव खलानां ॥ ६१ ॥

जेहिं चिय उब्भविया जाण पसाएण निग्गयपयावा।
समरा डहन्ति विञ्झं खलाण मग्गो च्चिय अउव्वो॥ ६२॥
सरसा वि दुमा दावाणलेण डज्झन्ति सुक्खसंवलिया।
दुज्जणसङ्गे पत्ते सुयणो वि सुहं न पावेइ॥ ६३॥
खलसज्जणाण दोसा गुणा य को वण्णिउं तरइ लोए।
अइ नवरि नायराओ दोहिं जीहासहस्सेहिं॥ ६४॥

## मित्तवज्जा।

एक्कं चिय सलहिज्जइ दिणेसदियहाण नवरि निव्वहणं।
आ जम्म एक्कमेक्केहि जेहि विरहो च्चिय न दिट्ठो॥ ६५॥
पडिवन्नं दिणयरवासराण दोण्हं अखण्डियं सुहइ।
सूरो न दिणेण विणा दिणो वि न हु सूरविरहम्मि॥ ६६॥
मित्तं पयतोयसमं सारिच्छं जं न होइ किं तेण।
अहियाएइ मिलन्तं आवइ आवट्टए पढमं॥ ६७॥
तं मित्त कायव्वं जं किर वसणम्मि देसकालम्मि।
आलिहियभित्तिवाउल्लयं व न परम्मुहं ठाइ॥ ६८॥
तं मित्तं कायव्वं जं मित्तं कालकम्बलीसरिसं।
उयएण धोयमाणं सहावरङ्गं न मेल्लेइ॥ ६९॥
सगुणाण निग्गुणाण य गरुया पालन्ति जं जि पडिवन्नं।
पेच्छह वसहेण समं हरेण वोलाविओ अप्पा॥ ७०॥
छिज्जउ सीसं अह होउ बन्धणं चयउ सव्वहा लच्छी।
पडिवन्नपालणे सुपुरिसाण जं होइ तं होउ॥ ७१॥

यैरेवोर्ध्वीकृता येषां प्रसादेन निर्गतप्रतापाः।
शबरा दहन्ति विन्ध्यं खलानां मार्ग एवापूर्वः ॥ ६२ ॥
सरसा अपि द्रुमा दावानलेन दह्यन्ते शुष्कसंवलिताः।
दुर्जनसङ्गे प्राप्ते सुजनोऽपि सुखं न प्राप्नोति ॥ ६३ ॥
खलसुजनयोर्दोषान् गुणांश्च को वर्णयितुं तरति लोके।
यदि नवरं नागराजो द्वाभ्यां जिह्वासहस्राभ्यां ॥ ६४ ॥

## मित्रपद्धतिः।

एकमेव श्लाघ्यते दिनेशदिवसयोर्निर्वहणं।
आ जन्म एकैकाभ्यां याभ्यां विरह एव न दिष्टः ॥ ६५ ॥
प्रतिपन्नं दिनकरवासरयोर्द्वयोरखण्डितं शोभते।
सूर्यो न दिनेन विना दिनमपि न खलु सूर्यविरहे ॥ ६६ ॥
मित्रं पयस्तोयसमं सदृशं यन्न भवति किं तेन।
अधिकायते मिलदायात्यावर्ते प्रथमं ॥ ६७ ॥
तन्मित्रं कर्तव्यं यत्किल व्यसने देशे काले च।
आलिखितभित्तिपुत्रक इव न पराङ्मुखं तिष्ठति ॥ ६८ ॥
तन्मित्रं कर्तव्यं यन्मित्रं कालकम्बलीसदृशं।
उदकेन धाव्यमानं स्वभावरङ्गं न मुञ्चति ॥ ६९ ॥
सगुणानां निर्गुणानां च गुरवः पालयन्ति यदेव प्रतिपन्नं।
प्रेचत वृषभेण समं हरेणातिक्रामित आत्मा ॥ ७० ॥
छिद्यतां शीर्षमथ भवतु बन्धनं त्यजतु सर्वथा लक्ष्मीः।
प्रतिपन्नपालने सुपुरुषाणां यद्भवति तद्भवतु ॥ ७१ ॥

दिढलोहसङ्कलाणं अन्नाण वि विविहपासबन्धाणं ।
ताणं चिय अहिययरं वायाबन्धं कुलीणस्स ॥ ७२

## नेहवज्जा ।

चन्दो धवलिज्जइ पुण्णिमाए अह पुण्णिमा वि चन्देण ।
समसुहदुक्खाइ मणे पुन्नेण विणा न लब्भन्ति ॥ ७३ ॥
एक्काए नवरि नेहो पयासिओ तिहुयणम्मि जोण्हाए ।
जा झिज्जइ झीणे ससहरम्मि वड्ढेइ वड्ढन्ते ॥ ७४ ॥
झिज्जइ झीणम्मि सया वड्ढइ वड्ढन्तयम्मि सविसेसं ।
सायरससीण छज्जइ जयम्मि पडिवन्ननिव्वहणं ॥ ७५ ॥
पडिवन्नं जेण समं पुव्वनिओएण होइ जीवस्स ।
दूरट्ठिओ न दूरे जह चन्दो कुमुयसण्डाणं ॥ ७६ ॥
दूरट्ठिया न दूरं सज्जणचित्ताण पुव्वमिलियाणं ।
गयणट्ठिओ वि चन्दो आसासइ कुमुयसण्डाइं ॥ ७७ ॥
दिट्ठे वि हु होइ सुहं जइ वि न पावन्ति अङ्गसङ्गाइं ।
दूरट्ठिओ वि चन्दो सुणिव्वुइं कुणइ कुमुयाणं ॥ ७८ ॥
एमेव कहवि कस्स वि केण वि दिट्ठेण होइ परिओसो ।
कमलायराण रइणा किं कज्जं जेण वियसन्ति ॥ ७९ ॥
कत्तो उग्गमइ रवी कत्तो वियसन्ति पङ्कयवणाइं ।
सुयणाण जत्थ नेहो न चलइ दूरट्ठियाणं पि ॥ ८० ॥

दृढलोहशृङ्खलेभ्योऽन्येभ्योऽपि विविधपाशबन्धेभ्यः।
तेभ्य एवाधिकतरं वाग्बन्धनं कुलीनस्य ॥ ७२ ॥

## स्नेहपद्धतिः।

चन्द्रो धवलीक्रियते पूर्णिमयाथ पूर्णिमापि चन्द्रेण।
समसुखदुःखानि मन्ये पुण्येन विना न लभ्यन्ते ॥ ७३ ॥
एकया नवरं स्नेहः प्रकाशितस्त्रिभुवने ज्योत्स्नया।
या क्षीयते क्षीणे शशधरे वर्धते वर्धमाने ॥ ७४ ॥
क्षीयते क्षीणे सदा वर्धते वर्धमाने सविशेषं।
सागरशशिनो राजते जगति प्रतिपन्ननिर्वहणं ॥ ७५ ॥
प्रतिपन्नं येन समं पूर्वनियोगेन भवति जीवस्य।
दूरस्थितो न दूरे यथा चन्द्रः कुमुदषण्डानां ॥ ७६ ॥
दूरस्थिता न दूरं सज्जनचित्तानां पूर्वमिलितानां।
गगनस्थितोऽपि चन्द्र आशास्ते कुमुदषण्डानि ॥ ७७ ॥
दृष्टेऽपि खलु भवति सुखं यद्यपि न प्राप्नुवन्त्यङ्गसङ्गान्।
दूरस्थितोऽपि चन्द्रः सुष्ठु निर्वृतिं करोति कुमुदानां ॥ ७८ ॥
एवमेव कथमपि कस्यापि केनापि दृष्टेन भवति परितोषः।
कमलाकराणां रविणा किं कार्यं येन विकसन्ति ॥ ७९ ॥
कुत उद्गच्छति रविः कुतो विकसन्ति पङ्कजवनानि।
सुजनानां यत्र स्नेहो न चलति दूरस्थितानामपि ॥ ८० ॥

## नाइवज्जा

जं जस्स मम्मभेयं चालिज्जन्तं च दूमए हिययं ।
तं तस्स कण्णकडुयं कुलेसु जाया न जम्पन्ति ॥ ८१ ॥
सन्तेहि असन्तेहि य परस्स किं जम्पिएहि दोसेहिं ।
अत्थो जसो न लब्भइ सो वि अमित्तो कओ होइ ॥ ८२ ॥
अप्पहियं कायव्वं जइ सक्कइ परहियं च कायव्वं ।
अप्पहियपरहियाणं अप्पहियं चेव कायव्वं ॥ ८३ ॥
पुरिसे सच्चसमिद्धे अलियपमुक्के सहावसंतुट्ठे ।
तवधम्मनियमसहए विसमा वि दसा समा होइ ॥ ८४ ॥
सीलं वरं कुलाओ दालिद्दं भव्वयं च रोगाओ ।
विज्जा रज्जाउ वरं खमा वरं सुट्ठु वि तवाओ ॥ ८५ ॥
सीलं वरं कुलाओ कुलेण किं होइ विगयसीलेण ।
कमलाइ कद्दमे संभवन्ति न हु हुन्ति मलिणाइं ॥ ८६ ॥
जं जि खमेइ समत्थो धणवन्तो जं न गव्वमुव्वहइ ।
जं च सविज्जो नमिरो तिसु तेसु अलंकिया पुहवी ॥ ८७ ॥
छन्दं जो अणुवट्टइ मम्मं रक्खइ गुणे पयासेइ ।
सो नवरि माणुसाणं देवाण वि वल्लहो होइ ॥ ८८ ॥
छणवज्जणेण वरिसो नासइ दिवसो कुभोयणे भुत्ते ।
कुकलत्तेण य जम्मो नासइ धम्मो अधम्मेण ॥ ८९ ॥
छम्मं धम्मं पयडं च पोरिसं परकलत्तवज्जणयं ।
गज्जणरहिओ जम्मो राढाइत्ताण संपडइ ॥ ९० ॥

## नीतिपद्धतिः ।

यद्यस्य मर्मभेदं शल्यमानं च दूयते हृदयं ।
तत्तस्य कर्णकटुं कुलेषु जाता न जल्पन्ति ॥ ८१ ॥
सद्भिरसद्भिश्च परस्य किं जल्पितैर्दोषैः ।
अर्थो यशो न लभ्यते स चामित्रीकृतो भवति ॥ ८२ ॥
आत्महितं कर्तव्यं यदि शक्यते परहितं च कर्तव्यं ।
आत्महितपरहितयोरात्महितं चैव कर्तव्यं ॥ ८३ ॥
पुरुषे सत्यसमृद्धेऽलीकप्रमुक्ते स्वभावसंतुष्टे ।
तपोधर्मनियमसये विषमापि दशा समा भवति ॥ ८४ ॥
शीलं वरं कुलाद्दारिद्र्यं भव्यं च रोगात् ।
विद्या राज्याद्वरं क्षमा वरं सुष्ठ्वपि तपसः ॥ ८५ ॥
शीलं वरं कुलात्कुलेन किं भवति विगतशीलेन ।
कमलानि कर्दमे संभवन्ति न खलु भवन्ति मलिनानि ॥ ८६ ॥
यद्येव क्षम्यति समर्थो धनवान्यद्गर्वं नोद्वहते ।
यच्च सविद्यो नम्रस्त्रिभिरेभिरलङ्कृता पृथ्वी ॥ ८७ ॥
छन्दं योऽनुवर्तते मर्म रक्षति गुणान् प्रकाशयति ।
स केवलं मानुषाणां देवानामपि वल्लभो भवति ॥ ८८ ॥
क्षणवञ्चनेन वर्षा नश्यति दिवसः कुभोजने भुक्ते ।
कुकलत्रेण च जन्म नश्यति धर्मोऽधर्मेण ॥ ८९ ॥
छन्नं धर्मं प्रकटं च पौरुषं परकलत्रवर्जनं ।
कलङ्करहितं जन्म भव्यात्मनां संपद्यते ॥ ९० ॥

## धीरवज्जा ।

अप्पाणं अमुयन्ता　जे आरम्भन्ति दुग्गमं कज्जं ।
परमुहपलोइयाणं　ताणं कह होइ जयलच्छी ॥ ९१ ॥
सिग्घं आरुह कज्जं　पारद्धं मा कहिं पि सिढिलेसु ।
पारद्धसिढिलियाइं　कज्जाइ पुणो न सिज्झन्ति ॥ ९२ ॥
अच्छउ ता इयरजणो　अङ्गे च्चिय जाइ पङ्कभूयाइं ।
ताइं चिय लज्जिज्जइ　पारद्धं परिहरन्तेण ॥ ९३ ॥
खीणविहवो वि सुयणो　सेवइ रण्णं न पत्थए अन्नं ।
मरणे वि अइमहग्घं　न विक्किणइ माणमाणिक्कं ॥ ९४ ॥
दे मग्गा भुवणयले　माणिणि माणुन्नयाण पुरिसाणं ।
अहवा पावन्ति सिरिं　अहव भमन्ता समप्पन्ति ॥ ९५ ॥
दोण्णि वि हुन्ति गईओ　साहसवन्ताण धीरपुरिसाणं ।
वेल्लहलकमलहत्था　रायसिरी अहव पव्वज्जा ॥ ९६ ॥
अहवा मरन्ति गुरुवसणपेल्लिया खण्डिऊण नियजीहं ।
नो गन्तूण खलाणं　चवन्ति दीणक्खरं धीरा ॥ ९७ ॥
अह सुप्पइ पियमालिङ्गिऊण उत्तुङ्गथोरथणवट्टे ।
अह नरकरङ्ककङ्कालसङ्कुले भीसणमसाणे ॥ ९८ ॥
अह भुञ्जइ सह पियकामिणीहि कच्चोलथालसिप्पीहिं ।
अहवा विमलकवाले　भिक्खं भमिऊण पेयवणे ॥ ९९ ॥
नमिऊण जं विढप्पइ　खलचलणं तिहुयणं पि किं तेण ।
माणेण जं विढप्पइ　तणं पि तं निव्वुइं कुणइ ॥ १०० ॥

## धीरपद्धतिः।

आत्मानमसुञ्चन्तो य आरभन्ते दुर्गमं कार्यं।
परमुखावलोकिनां तेषां कथं भवति जयलक्ष्मीः॥ ९१॥
ग्रीष्ममारुह कार्यं प्रारब्धं मा कथमपि शिथिलय।
प्रारब्धशिथिलितानि कार्याणि पुनर्न सिध्यन्ति॥ ९२॥
आस्तां तावदितरजनोऽङ्ग एव यानि पञ्चभूतानि।
तेभ्य एव लज्यते प्रारब्धं परिहरता॥ ९३॥
क्षीणविभवोऽपि सुजनः सेवतेऽरण्यं न प्रार्थयतेऽन्यं।
मरणेऽप्यतिमहार्घं न विक्रीणाति मानमाणिक्यं॥ ९४॥
द्वौ मार्गौ भुवनतले मानिनि मानोन्नतानां पुरुषाणां।
अथवा प्राप्नुवन्ति श्रियमथवा भ्रमन्तः समाप्यन्ते॥ ९५॥
द्वेऽपि भवतो गती साहसवतां धीरपुरुषाणां।
कोमलकमलहस्ता राजश्रीरथवा प्रव्रज्या॥ ९६॥
अथवा म्रियन्ते गुरुव्यसनक्षिप्ताः खण्डयित्वा निजजिह्वां।
नो गत्वा खलानां जल्पन्ति दीनाक्षरं धीराः॥ ९७॥
अथ सुप्यते प्रियामालिङ्ग्य उत्तुङ्गपृथुस्तनपृष्ठे।
अथ नरकरङ्ककङ्कालसङ्कुले भीषणश्मशाने॥ ९८॥
अथ भुङ्क्ते सह प्रियकामिनीभिः कल्लोलशालशुक्तिभिः।
अथवा विमलकपाले भिक्षां भ्रान्त्वा प्रेतवने॥ ९९॥
नत्वा यदर्ज्यते खलचरणांस्त्रिभुवनमपि किं तेन।
मानेन यदर्ज्यते तृणमपि तन्निर्वृतिं करोति॥ १००॥

ते धन्ना ताण नमो ते गरुया माणिणो थिरारम्भा ।
जे गरुयवसणपडिपेल्लिया वि अन्नं न पत्थन्ति ॥ १०१ ॥

तुङ्गो च्चिय होइ मणो मणंसिणो अन्तिमासु वि दसासु ।
अत्थन्तस्स वि रविणो किरणा उद्धं चिय फुरन्ति ॥ १०२ ॥

ता तुङ्गो मेरुगिरी मयरहरो ताव होइ दुत्तारो ।
ता विसमा कज्जगई जाव न धीरा पवज्जन्ति ॥ १०३ ॥

ता वित्थिण्णं गयणं ताव च्चिय जलहरा अइगहीरा ।
ता गरुया कुलसेला जाव न धीरेहि तुलन्ति ॥ १०४ ॥

मेरुं तिणं व मग्गं घरङ्गणं हत्थछित्तं गयणयलं ।
वाहलियाइ समुद्दा साहसवन्ताण पुरिसाणं ॥ १०५ ॥

संघडियघडियविघडिय — घडन्तविघडन्तसंघडिज्जन्तं ।
अवहत्थिऊण दिव्वं करेइ धीरो समारद्धं ॥ १०६ ॥

## साहसवज्जा ।

साहसमवलम्बन्तो पावइ हियइच्छियं न सन्देहो ।
जेणुत्तमङ्गमेत्तेण राहुणा कवलिओ चन्दो ॥ १०७ ॥

तं किं पि साहसं साहसेण साहन्ति साहससहावा ।
जं भविऊण दिव्वो परम्मुहो धुणइ नियसीसं ॥ १०८ ॥

थरहरइ धरा खुब्भन्ति सायरा होइ विम्हलो दइवो ।
असमववसायसाहस — संलद्धजसाण धीराणं ॥ १०९ ॥

अगणियसमविसमाणं साहसतुङ्गे समारुहन्ताणं ।
रक्खइ धीराण मणं आसन्नभयाउलो दइवो ॥ ११० ॥

ते धन्यास्तेभ्यो नमस्ते गुरवो मानिनः स्थिरारम्भाः।
ये गुरुव्यसनप्रतिप्रेरिता अप्यन्यं न प्रार्थयन्ते॥ १०१॥
तुङ्गमेव भवति मनो मनस्विनोऽन्तिमास्वपि दशासु।
अस्तमयमानस्यापि रवेः किरणा ऊर्ध्वमेव स्फुरन्ति॥ १०२॥
तावत्तुङ्गो मेरुगिरिर्मकरगृहं तावद्भवति दुस्तारं।
तावद्विषमा कार्यगतिर्यावन्न धीराः प्रपद्यन्ते॥ १०३॥
तावद्विस्तीर्णं गगनं तावदेव जलधरा अतिगम्भीराः।
तावद्गुरुकाः कुलशैला यावन्न धीरैस्तुल्यन्ते॥ १०४॥
मेरुस्तृणमिव स्वर्गो गृहाङ्गणं हस्तस्पृष्टं गगनतलं।
क्षुद्रनद्यः समुद्राः साहसवतां पुरुषाणां॥ १०५॥
संघटितघटितविघटितघटमानविघटमानसंघट्यमानं।
अपहस्त्य दैवं करोति धीरः समारब्धं॥ १०६॥

## साहसपद्धतिः।

साहसमवलम्बमानः प्राप्नोति हृदयेप्सितं न सन्देहः।
येनोत्तमाङ्गमात्रेण राहुणा कवलितश्चन्द्रः॥ १०७॥
तत्किमपि साहसं साहसेन साधयन्ति साहसस्वभावाः।
यद्भावयित्वा दैवं पराङ्मुखं धूनयति निजशिरः॥ १०८॥
कम्पते धरा क्षुभ्यन्ति सागरा भवति विक्लवं दैवं।
असमव्यवसायसाहससंलब्धयशोभ्यो धीरेभ्यः॥ १०९॥
अगणितसमविषमाणां साहसतुङ्गे समारोहतां।
रक्षति धीराणां मन आसन्नभयाकुलं दैवं॥ ११०॥

तं किं पि कज्जरयणं धीरा ववसन्ति साहसवसेण ।
जं बम्भहरिहराण वि लग्गइ चित्ते चमक्कारो ॥ १ १ १ ॥
धीरेण समं समसीसियाए रे दिव्व आरहन्तस्स ।
होहिइ किं पि कलङ्कं धुव्वन्तं जं न फिट्टिहिइ ॥ १ १ २ ॥
जह जह न समप्पइ विहि — वसेण विहडन्तकज्जपरिणामो ।
तह तह धीराण मणे वड्ढइ बिउणो समुच्छाहो ॥ १ १ ३ ॥
फलसंपत्तीए समोणयाइ तुङ्गाइ फलविपत्तीए ।
हिययाइ सुपुरिसाणं महातरूणं व सिहराइं ॥ १ १ ४ ॥
हियए जाओ तत्थेव वड्ढिओ नेय पयडिओ लोए ।
ववसायपायवो सुपुरिसाण लक्खिज्जइ फलेहिं ॥ १ १ ५ ॥
ववसायफलं विहवो विहवस्स य विहलजणसमुद्धरणं ।
विहलुद्धरणेण जसो जसेण भण किं न पज्जत्तं ॥ १ १ ६ ॥
आढत्ता सप्पुरिसेहि तुङ्गववसायदिन्नहियएहिं ।
कज्जारम्भा होहिन्ति निप्फला कह चिरं कालं ॥ १ १ ७ ॥
न महुमहणस्स वच्छे मज्झे कमलाण नेय खीरहरे ।
ववसायसायरे सुपुरिसाण लच्छी फुडं वसइ ॥ १ १ ८ ॥
तद्दियहारम्भवावडाणं भिन्तेक्ककज्जरसियाणं ।
रविरहतुरयाण व सुपुरिसाण न हु हिययवीसामो ॥ १ १ ९ ॥

## दिव्ववज्जा ।

अत्थो विज्जा पुरिसत्तणं च अन्नाइ गुणसहस्साइं ।
दिव्वायत्ते कज्जे सव्वाइ नरस्स विहडन्ति ॥ १ २ ० ॥

तत्किमपि कर्मरत्नं धीरा व्यवस्यन्ति साहसवशेन।
यद्ब्रह्महरिहराणामपि लगति चित्ते चमत्कारः॥ १११॥
धीरेण समं स्पर्धया रे दैवाहृतः।
भविष्यति कोऽपि कलङ्को धाव्यमानो यो न यास्यति॥ ११२॥
यथा यथा न समाप्यते विधिवशेन विघटमानकार्यपरिणामः।
तथा तथा धीराणां मनसि वर्धते द्विगुणः समुत्साहः॥ ११३॥
फलसंपत्त्या समवनतानि तुङ्गानि फलविपत्त्या।
हृदयानि सुपुरुषाणां महातरूणामिव शिखराणि॥ ११४॥
हृदये जातस्तत्रैव वर्धितो नैव प्रकटितो लोके।
व्यवसायपादपः सुपुरुषाणां लक्ष्यते फलैः॥ ११५॥
व्यवसायफलं विभवो विभवस्य च विह्वलजनसमुद्धरणं।
विह्वलोद्धरणेन यशो यशसा भण किं न पर्याप्तं॥ ११६॥
आरम्भाः सत्पुरुषैस्तुङ्गव्यवसायदत्तहृदयैः।
कार्यारम्भा भविष्यन्ति निष्फलाः कथं चिरं कालं॥ ११७॥
न मधुमथनस्य वक्षसि मध्ये कमलानां नैव क्षीरनिधौ।
व्यवसायसागरे सुपुरुषाणां लक्ष्मीः स्फुटं वसति॥ ११८॥
तद्दिवसारम्भव्यापृतानां सिद्धैककार्यरसिकानां।
रविरथतुरगाणामिव सुपुरुषाणां न खलु हृदयविश्रामः॥ ११९॥

## दैवपद्धतिः।

अर्था विद्या पौरुषलं चान्यानि गुणसहस्राणि।
दैवायत्ते कार्ये सर्वाणि नरस्य विघटन्ते॥ १२०॥

सत्थत्थे पडियस्स वि मज्झेणं एइ किंपि तं कज्जं ।
जं न कहिउं न सहिउं न चेव पच्छाइउं तरइ ॥१२१॥
जइ विसइ विसमविवरे लङ्घइ उदहिं करेइ ववसायं ।
तह वि हु फलं न पावइ पुरिसो दिव्वे पराहुत्ते ॥१२२॥
नग्घन्ति गुणा विहडन्ति बन्धवा वल्लहा विरज्जन्ति ।
ववसाओ न समप्पइ नरस्स दिव्वे पराहुत्ते ॥१२३॥
जं जा डाला लब्भइ हत्थं गहिऊण वीसमइ जत्थ ।
सा सा तडत्ति तुट्टइ नरस्स दिव्वे पराहुत्ते ॥१२४॥
जं नयणेहि न दीसइ हियएण वि जं न चिन्तियं कइवि ।
तं तं सिरम्मि निवडइ नरस्स दिव्वे पराहुत्ते ॥१२५॥

## विहिवज्जा ।

खण्डिज्जइ विहिणा सस – हरो वि सूरस्स होइ अत्थमणं ।
हा दिव्वपरिणईए कवलिज्जइ को न कालेणं ॥१२६॥
को एत्थ सया सुहिओ कस्स व लच्छीथिराइ पेम्माइं ।
कस्स व न होइ खलणं भण को हु न खण्डिओ विहिणा ॥१२७॥
उन्नय नीया नीया वि उन्नया हुन्ति तक्खण च्चेव ।
विहिपरिणामियकज्जं हरिहरबम्हा न याणन्ति ॥१२८॥
विहिणा जं चिय लिहियं नलाडवट्टीए तेण दइवेण ।
पच्छा सो वि पसन्नो अन्नह करिउं न हु समत्थो ॥१२९॥
किं करइ किर वराओ साहसववसायमाणगरुओ वि ।
पुरिसो भग्गपयावो विहिणा विवरीयरूवेण ॥१३०॥

स्वस्थार्थे पतितस्यापि सखेनेति तत्किमपि कार्यं।
यन्न कथयितुं न सोढुं न चैव प्रच्छादयितुं शक्नोति ॥१२१॥
यदि विशति विषमविवरे लङ्घ्यत्युदधिं कुरुते व्यवसायं।
तथापि खलु फलं न प्राप्नोति पुरुषो दैवे पराङ्मुखे ॥१२२॥
नार्घन्ति गुणा विघटन्ते बान्धवा वल्लभा विरज्यन्ते।
व्यवसायो न समाप्यते नरस्य दैवे पराङ्मुखे ॥१२३॥
यां यां शाखां लम्बते हस्तेन गृहीत्वा विश्राम्यति यस्यां।
सा सा तटेति त्रुट्यति नरस्य दैवे पराङ्मुखे ॥१२४॥
यन्नयनाभ्यां न दृश्यते हृदयेनापि यन्न चिन्तितं कथमपि।
तत्तच्छिरसि निपतति नरस्य दैवे पराङ्मुखे ॥१२५॥

## विधिपद्धतिः।

खण्ड्यते विधिना शशधरोऽपि सूर्यस्य भवत्यस्तमनं।
हा दैवपरिणत्या कवलीक्रियते को न कालेन ॥१२६॥
कोऽत्र सदा सुखितः कस्य वा लक्ष्मीस्थिराणि प्रेमाणि।
कस्य वा न भवति स्खलनं भण कः खलु विधिना खण्डितः ॥१२७॥
उन्नता नीचा नीचा अप्युन्नता भवन्ति तत्क्षणादेव।
विधिपरिणमितकार्यं हरिहरब्रह्माणो न जानन्ति ॥१२८॥
विधिना यदेव लिखितं ललाटपट्टे तेन दैवेन।
पश्चात्सोऽपि प्रसन्नोऽन्यथा कर्तुं न खलु समर्थः ॥१२९॥
किं करोति वराकः किल साहसव्यवसायमानगुरुरपि।
पुरुषो भग्नप्रतापो विधिना विपरीतरूपेण ॥१३०॥

बेसि वि महणारम्भे पेच्छह जं पुव्वकम्मपरिणामो ।
उप्पज्जइ हरइ विसं कण्हस्स घणत्थणा लच्छी ॥१२१॥
*विहिविहियं चिय लब्भइ अमयं देवाण महमहे लच्छी ।
रयणायरम्मि महिए हरस्स भाए विसं जायं ॥१२२॥*

## दीनवज्जा ।

परपत्थणापवन्नं मा जणणि जणेसु एरिसं पुत्तं ।
उयरे वि मा धरिज्जसु पत्थणभङ्गो कओ जेण ॥१२३॥
ता रूवं ताव गुणा लज्जा सच्चं कुलक्कमो ताव ।
ताव चिय अहिमाणो देहि त्ति न भण्णए जाव ॥१२४॥
तिणतूलं पि हु लहुयं दीणं दइवेण निम्मियं भुवणे ।
वाएण किं न नीयं अप्पाणं पत्थणभएण ॥१२५॥
थरथरथरेइ हिययं जीहा घोलेइ कण्ठमज्झम्मि ।
नासइ मुहलावण्णं देहि त्ति परं भणन्तस्स ॥१२६॥
किसिणिज्जन्ति लयन्ता उदहिजलं जलहरा पयत्तेण ।
धवलीहुन्ति हु देन्ता देन्तलयन्तन्तरं पेच्छ ॥१२७॥

## दारिद्दवज्जा ।

दारिद्दय तुज्झ गुणा गोविज्जन्ता वि धीरपुरिसेहिं ।
पाहुणएसु छणेसु य वसणेसु य पायडा हुन्ति ॥१२८॥
दारिद्दय तुज्झ नमो जस्स पसाएण एरिसी रिद्धी ।
पेच्छामि सयललोए ते मह लोया न पेच्छन्ति ॥१२९॥

द्वावपि मथनारम्भे प्रेक्षत यत्पूर्वकर्मपरिणामः।
उत्पद्यते हरस्य विषं कृष्णस्य घनस्तना लक्ष्मीः॥१२१॥
*विधिविहितमेव लभ्यतेऽमृतं देवानां मधुमथने लक्ष्मीः।*
*रत्नाकरे मथिते हरस्य भागे विषं जातं॥१२२॥*

## दीनपद्धतिः।

परप्रार्थनाप्रपन्नं मा जननि जनयस्वेदृशं पुत्रं।
उदरेऽपि मा ध्रियस्व येन प्रार्थनाभङ्गः कृतः॥१२३॥
तावद्रूपं तावद्गुणा लज्जा सत्यं कुलक्रमस्तावत्।
तावद्देवाभिमानो देहीति न भण्यते यावत्॥१२४॥
तृणतूलमपि खलु लघु दीनं दैवेन निर्मितं भुवने।
वातेन किं न नीतमात्मानं प्रार्थनाभयेन॥१२५॥
कम्पते हृदयं जिह्वा घूर्णते कण्ठमध्ये।
नश्यति मुखलावण्यं देहीति परं भणतः॥१२६॥
कृष्णीभवन्ति गृह्णन्त उदधिजलं जलधराः प्रयत्नेन।
धवलीभवन्ति खलु ददतो ददद्बृहदन्तरं प्रेक्ष॥१२७॥

## दारिद्र्यपद्धतिः।

दारिद्र्य तव गुणा गोप्यमाना अपि धीरपुरुषैः।
प्राङ्गणेषु क्षणेषु च व्यसनेषु च प्रकटीभवन्ति॥१२८॥
दारिद्र्य तुभ्यं नमो यस्य प्रसादेनेदृश्यृद्धिः।
प्रेक्षामि सकललोकांस्ते मां लोका न प्रेक्षन्ति॥१२९॥

जे जे गुणिणो जे जे वि माणिणो जे वियड्ढसंमाणा ।
दालिद्द रे वियक्खण ताण तुमं साणुराओ सि ॥१४०॥
दीसन्ति जोयसिद्धा अञ्जणसिद्धा वि केवि दीसन्ति ।
दारिद्दजोयसिद्धं मं ते लोया न पेच्छन्ति ॥१४१॥
जे भग्गा विहवसमीरणेण वङ्कं ठवन्ति पयमग्गं ।
ते नूणं दालिद्दोसहेण अह पञ्जलिज्जन्ति ॥१४२॥
किं वा कुलेण कीरइ किं वा विणएण किं व रूवेण ।
धणरहियाणं सुन्दरि नराण को आयरं कुणइ ॥१४३॥
जाई रूवं विज्जा तिन्नि वि गच्छन्तु कन्दरे विवरे ।
अत्थो च्चिय परिवड्ढउ जेण गुणा पायडा हुन्ति ॥१४४॥
धम्मत्थकामरहिया जे दियहा निद्धणाण वोलीणा ।
जइ ताइ गणेइ विही गणेउ न हु एरिसं जुत्तं ॥१४५॥
संकुयइ संकुयन्ते वियसइ वियसन्तयम्मि सूरम्मि ।
सिसिरे रोरकुडुम्बं पङ्कयलीलं समुव्वहइ ॥१४६॥

## पहुवज्जा ।

छज्जइ पहुस्स ललियं पियाइ माणो खमासमत्थस्स ।
जाणन्तस्स य भणियं मोणं च अयाणमाणस्स ॥१४७॥
सच्छन्दं बोलिज्जइ किज्जइ जं नियमणस्स पडिहाइ ।
अजसस्स न बीहिज्जइ पहुत्तणं तेण रमणिज्जं ॥१४८॥
अण्णदिणे थणनिवडण — भएण दिज्जन्ति धाइउच्छङ्गे ।
पहुणो जं नीयरया मज्झे तं खीरमाहप्पं ॥१४९॥

ये ये गुणिनो ये येऽपि मानिनो ये विदग्धसंमानाः।
दारिद्र्य रे विचक्षण तेषु त्वं सानुरागोऽसि ॥१४०॥
दृश्यन्ते योगसिद्धा अञ्जनसिद्धा अपि केचन दृश्यन्ते।
दारिद्र्ययोगसिद्धं मां ते लोका न प्रेक्षन्ते ॥१४१॥
ये 'भग्ना विभवसमीरणेन वक्रं स्थापयन्ति पदमार्गं।
ते नूनं दारिद्र्यौषधेन यदि प्राञ्जला भवन्ति ॥१४२॥
किं वा कुलेन क्रियते किं वा विनयेन किं वा रूपेण।
धनरहितानां सुन्दरि नराणां क आदरं करोति ॥१४३॥
जाती रूपं विद्या त्रीण्यपि गच्छन्तु कन्दरे विवरे।
अर्थ एव परिवर्धतां येन गुणाः प्रकटीभवन्ति ॥१४४॥
धर्मार्थकामरहिता ये दिवसा निर्धनानामतिक्रान्ताः।
यदि तान् गणयति विधिर्गणयतु न खल्वीदृशं युक्तं ॥१४५॥
संकुचति संकुचति विकसति विकसति सूर्ये।
शिशिरे दरिद्रकुटुम्बं पङ्कजलीलां समुद्वहति ॥१४६॥

## प्रभुपद्धतिः।

राजते प्रभोर्ललितं प्रियाया मानः क्षमासमर्थस्य।
जानतश्च भणितं मौनं चाजानतः　　॥१४७॥
स्वच्छन्दं कथ्यते क्रियते यन्निजमनसः प्रतिभाति।
अयशसो न भीयते प्रभुत्वं तेन रमणीयं ॥१४८॥
जन्मदिवसे स्तननिपतनभयेन दीयन्ते धात्र्युत्सङ्गे।
प्रभवो यन्नीचरता मन्ये तत्क्षीरमाहात्म्यं　　॥१४९॥

छिट्टे जडनिवहं तह य सुपत्ताइ उत्तमङ्गेसु ।
जइ होइ तह तह जइ पङ्कणो ता किं न पज्जत्तं ॥१५०॥

## सेवयवज्जा ।

जं सेवयाण दुक्खं चारित्तविवज्जियाण नरणाह ।
तं होउ तुह रिऊणं अहवा ताणं पि मा होउ ॥१५१॥
भूमीसयणं जरचीरबन्धणं बम्भचेरयं भिक्खा ।
मुणिचरियं दुग्गयसेवयाण धम्मो परं नत्थि ॥१५२॥
जइ नाम कहव मोक्खं होइ तुलग्गेण सेवयजणस्स ।
तं खवणयमग्गारोहणं व विग्गोवयमणहिं ॥१५३॥
ओलग्गिओ सि धम्मम्मि होज्ज एण्हिं नरिन्द वच्चामो ।
आलिहियकुञ्जरस्स व तुह पङ्क दाणं चिय न दिट्ठं ॥१५४॥
आसन्नफलो फणसो व्व नाह सयलस्स सेवयजणस्स ।
अन्नं पुण पत्थिव पत्थिओ वि ताओ तमं जाओ ॥१५५॥
फणसेण समं महिमण्डलम्मि का तरुवराण ममसीसी ।
करिकुम्भसच्छहं मग्गणाण जो देइ फलनिवहं ॥१५६॥
वरिसिहिसि तुमं जलहर भरिहिसि भुवणन्तराइ नीसेसं ।
तण्हासुसियसरीरे मुयम्मि वप्पीहयकुडुम्बे ॥१५७॥
देहि त्ति कह नु भणइ सुपुरिसववहारबाहिरं वयणं ।
सेविज्जइ विणएणं एस च्चिय पत्थणा लोए ॥१५८॥
भुञ्जन्ति कमण्डमणा अब्भन्तरसंठिया गइन्दस्स ।
जे पुण विञ्झसहाया ते धवला बाहिर च्चेव ॥१५९॥

अधोऽधो जडनिवहं तथा च सुपञ्चाण्युत्तमाङ्गेषु।
यथा भवति तरुस्तथा यदि ऽभवस्तस्मात्किं न पर्याप्तं॥१५०॥

## सेवकपद्धतिः।

यत्सेवकानां दुःखं चारित्रविवर्जितानां नरनाथ।
तद्भवतु तव रिपूणामथवा तेषामपि मा भवतु॥१५१॥
भूमौशयनं जरचीरबन्धनं ब्रह्मचर्यं भिक्षा।
मुनिचरितं दुर्गतसेवकानां धर्मः परं नास्ति॥१५२॥
यदि नाम कथमिव सौख्यं भवति काकतालीयेन सेवकजनस्य।
तत्क्षपणकस्वर्गारोहणमिव व्याकुलभावशतैः॥१५३॥
अवलग्नोऽसि धर्मं भूया इदानीं नरेन्द्र व्रजामः।
आलिखितकुञ्जरस्येव तव प्रभो दानमेव न दृष्टं॥१५४॥
आसन्नफलो पनस इव नाथ सकलस्य सेवकजनस्य।
अस्माकं पुनः पार्थिव प्रार्थितोऽपि तालस्त्वं जातः॥१५५॥
पनसेन समं महीमण्डले का तरुवराणां स्पर्धा।
करिकुम्भसदृक्षं मार्गणानां यो ददाति फलनिवहं॥१५६॥
वर्षिष्यसि त्वं जलधर भरिष्यसि भुवनान्तराणि निःशेषं।
तृष्णाशोषितशरीरे मृते चातककुटुम्बे॥१५७॥
देहीति कथं नु भण्यते सुपुरुषव्यवहारबहिर्भूतं वचनं।
सेव्यते विनयेनैषैव प्रार्थना लोके॥१५८॥
भुञ्जते कृष्णदशना अभ्यन्तरसंस्थिता गजेन्द्रस्य।
ये पुनर्विधुरसहायास्ते धवला बहिरेव॥१५९॥

तम्बाउ तिन्नि सुपञ्चो — हगाउ चत्तारि पक्कलबइल्ला ।
निप्पन्ना रालयमञ्जरीउ सेवा सुहं कुणउ ॥ १६० ॥
सब्वो छुहिश्रो सोहइ मढदेउलमन्दिरं च चच्चरयं ।
नरणाह मह कुडुम्बं छुहछुहियं दुब्बलं होइ ॥ १६१ ॥

## सुहडवज्जा

जं दिज्जइ पहरपरब्वसेहि मुच्छागएहि पयमेक्कं ।
तह नेहस्स पयस्स व न याणिमो को समब्भहिश्रो ॥ १६२ ॥
भग्गे वि बले वलिए त्ति साहणे सामिए निरुच्छाहे ।
नियभुयविक्कमसारा थक्कन्ति कुलुग्गया सुहडा ॥ १६३ ॥
विघलइ धणं न माणं झिज्जइ अङ्गं न झिज्जइ पयावो ।
रूवं न चलइ फुरणं सिविणे वि मणंसियत्थाणं ॥ १६४ ॥
श्रवमाणिश्रो व्व संमाणिश्रो व्व नवसेवश्रो व्व कुविश्रो व्व ।
पहरइ कयावराहो व्व निश्रश्रो को वि सङ्गामे ॥ १६५ ॥
उथरे श्रसिकप्परिए श्रन्तोहे निवडियम्मि चलणेसु ।
भमइ भडो जसलुद्धो ससङ्खलो मत्तहत्थि व्व ॥ १६६ ॥
दाहिणकरेण खग्गं वामेण सिरं धरेइ निवडन्तं ।
श्रन्तावेढियचलणो धाइ भडो एक्कमेक्कस्स ॥ १६७ ॥
श्रज्ज वि विङ्करो सुपहु श्रज्ज त्ति पहरन्ति सुहडसंघाया ।
श्रज्ज वि मज्झत्था जयसिरी वि ता जीव मा वच्च ॥ १६८ ॥
नेच्छइ सग्गग्गमणं कुवइ भडो सुरवहूहि निज्जन्तो ।
गहयपडिवक्खपेल्लिय — सामियकज्जे श्रणिव्वाए ॥ १६९ ॥

गात्रस्थितः सुपयोधराश्रलार: समर्थवृषभा: ।
निष्पन्ना शालकमञ्जर्य: सेवा सुखं करोतु ॥ १६० ॥
सर्वो: (क्षुधितः) धवलितः शोभते मठदेवकुलमन्दिरं च चत्वरं ।
नरनाथ मम कुटुम्बं क्षुधितं दुर्बलं भवति ॥ १६१ ॥

## सुभटपद्धतिः

यद्दीयते प्रहारपरवशैर्मूर्च्छागतैः पदमेकं ।
तथा स्नेहस्य पयसो वा न जानीमः किमभ्यधिकं ॥ १६२ ॥
भग्नेऽपि बले वलितेऽपि साधने स्वामिनि निरुत्साहे ।
निजभुजविक्रमसारास्तिष्ठन्ति कुलोद्गताः सुभटाः ॥ १६३ ॥
विगलति धनं न मानः क्षीयतेऽङ्गं न क्षीयते प्रतापः ।
रूपं न चलति स्फुरणं स्वप्नेऽपि मनस्विसार्थानां ॥ १६४ ॥
अपमानित इव संमानित इव नवसेवक इव कुपित इव ।
प्रहरति कृतापराध इव निर्भयः कोऽपि सङ्ग्रामे ॥ १६५ ॥
उदरेऽसिदारितेऽन्त्रौघे निपतिते चरणयोः ।
भ्रमति भटो यशोलुब्धः सशृङ्खलो मत्तहस्तीव ॥ १६६ ॥
दक्षिणकरेण खड्गं वामेन शिरो निपतद्धारयति ।
अन्त्रावेष्टितचरणो धावति भट एकैकस्य ॥ १६७ ॥
अद्यापि विधुरः सुप्रभुरद्यापि प्रहरन्ति सुभटसंघाताः ।
अद्यापि मध्यस्था जयश्रीरपि तस्माज्जीव मा व्रज ॥ १६८ ॥
नेच्छति स्वर्गगमनं कुप्यति भटः सुरवधूभिर्नीयमानः ।
गुरुकप्रतिपक्षक्षिप्तस्वामिकार्येऽनिर्मिते ॥ १६९ ॥

एक्को वि को वि नियगोत्तभूसणो धरउ जणणिउयरम्मि ।
जो रिउघडाए समुहो परम्मुहो परकलत्ताणं ॥ १७० ॥
वियडं सो परिसक्कउ सामिपसायं च सो समुव्वहउ ।
दुव्वारवेरिवारण – निवारणा जस्स भुयदण्डा ॥ १७१ ॥
एक्कं दन्तम्मि पयं बीयं कुम्भम्मि तइयमल्लहन्तो ।
बलिबन्धविलसियं सङ्क – महस्स आलम्बए सुहडो ॥ १७२ ॥
चलचमरकण्णचालिर – विज्जिज्जन्तो भडो गइन्देण ।
ओ सुवइ सामिकयकज्जनिब्भरो दन्तपलङ्के ॥ १७३ ॥
गाढासणस्स कस्स वि उयरे निहयस्स मण्डलग्गेण ।
अद्धं महीए पडियं तुरङ्गपिट्ठिट्ठियं अद्धं ॥ १७४ ॥
सब्भावे पङ्कहियए जीए मग्गे जसे जए सयले ।
ठविए रणम्मि सीसे कयकज्जो नच्चिओ सुहडो ॥ १७५ ॥
छिन्ने रणम्मि बङ्कपङ्कपसायमालापडिच्छिरे सीसे ।
उत्तिण्णगरुयभारं व नच्चियं नरवरकबन्धं ॥ १७६ ॥
पच्छाणिलेण पङ्कणो विरमउ मुच्छ त्ति पासपडिएण ।
गिद्धन्तकड्ढणं दूसहं पि साहिज्जइ भडेण ॥ १७७ ॥
वच्छत्थलं च सुहडस्स रुहिरकुङ्कुमविलित्तयङ्गस्स ।
वरकामिणि व्व चुम्बइ उरे निसण्णा सिवा वयणं ॥ १७८ ॥

## धवलवज्जा

संचुण्णियघोरजुयप्पहारसंजणियगरुयकिणसोहो ।
धवलस्स महाभरकड्ढणाइ कन्धो च्चिय कहेइ ॥ १७९ ॥

एकोऽपि कोऽपि निजगोत्रभूषणो म्रियते जनन्युदरे।
यो रिपुघटानां संमुखः पराङ्मुखः परकलत्रेभ्यः ॥ १७० ॥
विकटं स परिक्रामतु स्वामिप्रसादं च स समुद्वहतु।
दुर्वारवैरिवारणनिवारणा यस्य भुजदण्डाः ॥ १७१ ॥
एकं दन्ते पदं द्वितीयं कुम्भे तृतीयमलभमानः।
बलिबन्धविलसितं मधुमथ आलम्बते सुभटः ॥ १७२ ॥
चलचमरचालनशीलकर्णवीज्यमानो भटो गजेन्द्रेण।
अहो स्वपिति स्वामिकृतकार्यनिर्भरो दन्तपर्यङ्के ॥ १७३ ॥
गाढामनस्य कस्याप्युदरे निहतस्य मण्डलाग्रेण।
अर्धं मह्यां पतितं तुरङ्गपृष्ठस्थितमर्धं ॥ १७४ ॥
सद्भावे प्रभुहृदये जीवे स्वर्गे यशसि सकले जगति।
स्थापिते रणे शिरसि कृतकार्यो नर्तितः सुभटः ॥ १७५ ॥
छिन्ने रणे बहुप्रभुप्रसादमालाप्रतीच्छणशीले शिरसि।
उत्तीर्णगुरुकभारमिव नर्तितं नरवरकबन्धं ॥ १७६ ॥
पक्षानिलेन प्रभोर्विरमतु मूर्छेति पार्श्वपतितेन।
गृध्राण्त्राकर्षणं दुःसहमपि सह्यते भटेन ॥ १७७ ॥
वक्षःस्थलं च सुभटस्य रुधिरकुङ्कुमविलिप्ताङ्गस्य।
वरकामिनीव चुम्बत्युरसि निषण्णा शिवा वदनं ॥ १७८ ॥

## धवलपद्धतिः

संचूर्णितपृथुयुगप्रहारसंजनितगुरुककिणशोभः।
धवलस्य महाभरकर्षणानि स्कन्ध एव कथयति ॥ १७९ ॥

अह मरइ धुरालग्गो संचुण्णियसन्धिबन्धणो धवलो ।
न हु पामरस्स विहुरे आरापरिघट्टणं सहइ ॥ १८० ॥

अह तोडइ नियकन्धं अह कड्ढइ गरुयभरम्मि दुव्वोज्झं ।
धवलो धुरम्मि जुत्तो न सहइ उच्चारियं हक्कं ॥ १८१ ॥

विसमम्मि विसमचक्कट्ठियचक्कयक्के भरम्मि जाणिहिमि ।
अविसेसणय गहवइ परम्मुहो जं सि धवलाणं ॥ १८२ ॥

अमुणियगुणो न जुप्पइ न मुणिज्जइ स य गुणो अजुत्तस्स ।
थक्के भरे विसूरइ अउव्ववग्गं गओ धवलो ॥ १८३ ॥

सो च्चिय सयडे सो च्चिय हलम्मि सो च्चिय वहेइ पिट्ठीए ।
बहुगोधणो वि हलिओ नन्दइ एक्केण धवलेण ॥ १८४ ॥

कत्तो लब्भन्ति धुरंधराइ धवलाइ भरसमत्थाइं ।
अइविहुरे गुरुभारं कड्ढन्ति य लीलमत्ताए ॥ १८५ ॥

## विञ्झवज्जा

दन्तच्छोहं तडवियडमोडणं सरसपल्लवुल्लिहणं ।
जइ विञ्झो च्चिय न सहइ ता करिणो कत्थ वच्चन्ति ॥ १८६ ॥

सा रेवा ताइं पाणियाइ ते च्चेव करिणिसंघाया ।
सा सल्लइ सल्लइ गय – वरस्स विञ्झं सुयन्तस्स ॥ १८७ ॥

विञ्झेण विणा वि गया नरवइभुवणेसु गोरविज्जन्ति ।
विञ्झो न होइ अगओ गएहि बहुएहि वि गएहिं ॥ १८८ ॥

गोमहिससतुरङ्गाणं पसूण सव्वाण जुज्जए ठाणं ।
दन्तुग्गइन्दाण पुणो अह विञ्झो अह महाराओ ॥ १८९ ॥

अथ म्रियते धुरालग्नः संचूर्णितसन्धिबन्धनो धवलः।
न खलु पामरस्य विधुर आरापरिघट्टनं सहते ॥ १८० ॥
अथ चोटयति निजस्कन्धमथ कर्षति गुरुभरे दुर्वाह्यं।
धवलो धुरि युक्तो न सहत उच्चारितं प्रेरणं ॥ १८१ ॥
चिक्कणचिखल्लमग्नचक्रस्थिते भरे ग्रामस्यापि।
अविशेषज्ञ गृहपते पराङ्मुखो यदसि धवलेभ्यः ॥१८२ ॥
अज्ञातगुणो न युज्यते न ज्ञायते स च गुणोऽयुक्तस्य।
स्थिते भरे खिद्यतेऽपूर्ववल्गां गतो धवलः ॥ १८३ ॥
स एव शकटे स एव हले स एव वहति पृष्ठ्यां।
सकलगोधनोऽपि हालिको नन्दत्येकेन धवलेन ॥ १८४ ॥
कुतो लभ्यते धुरंधरा धवला भरसमर्थाः।
अतिविधुरे गुरुभरं कर्षन्ति च लीलामात्रेण ॥ १८५ ॥

## विन्ध्यपद्धतिः

दन्तक्षोभं तटविकटमोटनं सरसपल्लवोल्लेखनं।
यदि विन्ध्य एव न सहते तदा करिणः कुतो व्रजन्ति ॥ १८६ ॥
सा रेवा तानि पानीयानि त एव करिणीसंघाताः।
सा सल्लकी शल्यायते गजवरस्य विन्ध्यं स्मरतः ॥ १८७ ॥
विन्ध्येन विनापि गजा नरपतिभुवनेषु गौरविता भवन्ति।
विन्ध्यो न भवत्यगजो गजैर्बहुभिरपि गतैः ॥ १८८ ॥
गोमहिषतुरङ्गाणां पशूनां सर्वाणां युज्यते स्थानं।
दग्धगजेन्द्राणां पुनोऽथ विन्ध्योऽथ महाराजः ॥ १८९ ॥

## गयवज्जा

वियलियमएण गयजोव्वणेण वल्लन्तदन्तमुसलेण ।
अज्ज वि वणं सणाहं जूहाहिव पइ जियन्तेण ॥ १९० ॥
अज्ज वि संभरइ गओ मज्जन्तो सरवरम्मि लीलाए ।
जं करिणिकरग्गुव्वूलिएण पइओ मुणालेण ॥ १९१ ॥
मा सुमरसु चन्दणपल्लवाण करिणाह गेण्ह तिणकवलं ।
जं जह परिणमइ दसा तं तह धीरा पडिच्छन्ति ॥ १९२
मा झिज्जसु अणुदियहं करिणिविओएण मूढकरिणाह ।
सोक्खं न होइ कस्स वि निरन्तरं एत्थ संसारे ॥ १९३ ॥
जायासुयविरहविसंठुलस्स जूहाहिवस्स विञ्झम्मि ।
ते सरसपल्लवा सल्लईए विसकवलसारिच्छा ॥ १९४ ॥
गहवइकुडाउलियस्स य वल्लहकरिणीसुहं भरन्तस्स ।
सरसो मुणालकवलो गयस्स हत्थे च्चिय विलीणो ॥ १९५ ॥
तइ नीससियं जूहाहिवेण चिरविलसियं भरन्तेण ।
करगहियं तिणकवलं हरियं जह झत्ति पज्जलियं ॥ १९६ ॥
विरहपलित्तो रे वर — गइन्द मा भञ्ज मयलवणराई ।
उम्मूलिए वि विञ्झे विरहावत्था तह च्चेय ॥ १९७ ॥
जूहाओ वणगहणं गहणाउ सरं सराउ गिरिसिहरं ।
सिहरासिंतो पुहवी निएइ हत्थी पियाविरहे ॥ १९८ ॥
करिणिकरप्पियनवसरससल्लईकवलभोयणं दन्ती ।
जइ न मरइ सुमरन्तो ता किं किसिओ वि मा होउ ॥१९९॥

## गजपद्धतिः

विगलितमदेन गतयौवनेन चलद्दन्तमुसलेन।
अद्यापि वनं सनाथं यूथाधिप त्वया जीवता॥ १९०॥

अद्यापि संस्मरति गजो मज्जन् सरोवरे लीलया।
यत्करिणीकराग्रोन्मूलितेन प्रहतो मृणालेन॥ १९१॥

मा स्मर चन्दनपल्लवानां करिनाथ गृहाण तृणकवलं।
या यथापरिणमति दशा तां तथा धीरः प्रतीच्छन्ति॥ १९२॥

मा क्षीयस्वानुदिवसं करिणिवियोगेन मूढकरिनाथ।
सौख्यं न भवति कस्यापि निरन्तरमत्र संसारे॥ १९३॥

जायासुतविरहविसंस्थुलस्य यूथाधिपतेर्विन्ध्ये।
ते सरसपल्लवाः ग्रासस्था विषकवलसदृशाः॥ १९४॥

गुरुक्षुधाकुलितस्य च वल्लभाकरिणीसुखं स्मरतः।
सरसो मृणालकवलो गजस्य हस्त एव विलीनः॥ १९५॥

तथा निःश्वसितं यूथाधिपेन चिरविलसितं स्मरता।
करगृहीतं तृणकवलं हरितं यथा झटिति प्रज्वलितं॥ १९६॥

विरहप्रदीप्तो रे वरगजेन्द्र मा भङ्क्ष्व सकलवनराजीः।
उन्मूलितेऽपि विन्ध्ये विरहावस्था तथैव॥ १९७॥

यथाद्यनगहनं गहनात्सरः सरसो गिरिशिखरं।
शिखरेभ्यः पृथिवीं पश्यति हस्ती प्रियाविरहे॥ १९८॥

करिणीकरार्पितनवसरसल्लकीकवलभोजनं दन्ती।
यदि न स्रियते स्मरंस्तदा किं क्षणोऽपि मा भवतु॥ १९९॥

## सीहवज्जा

किं करइ कुरङ्गी बहु–सुएहि ववसायमाणरहिएहिं ।
एक्केण वि गयघडदारणेण सिंघी सुहं सुवइ ॥ २०० ॥
जाइविसुद्धाण नमो ताण मइन्दाण अहह जियलोए ।
जे जे कुलम्मि जाया ते ते गयकुम्भनिद्दलणा ॥ २०१ ॥
मा जाणह जह तुङ्गत्तणेण पुरिसाण होइ सोण्डीरं ।
मडहो वि मइन्दो करि–वराण कुम्भत्थलं दलइ ॥ २०२ ॥
वेण्हि वि रणुप्पला बज्झन्ति गया न चेव केसरिणो ।
संभाविज्जइ मरणं न गञ्जणं धीरपुरिसाणं ॥ २०३ ॥

## वाहवज्जा

एक्कसरपहरदारिय–माइन्दगइन्दजुज्झमाभिडिए ।
वाहि न लज्जसि नच्चसि दोहग्गे पायडिज्जन्ते ॥ २०४ ॥
कत्तो तं रायघरेसु विलसियं जं घरम्मि वाहस्स ।
गयकुम्भवियारियमोत्तिएहि जं जङ्गलं किणइ ॥ २०५ ॥
अज्ज कयत्थो दियहो वाहवहू रूवजोव्वणुम्माइया ।
सोहग्गं धणुरुम्मच्छलेण रच्छासु विक्खिरइ ॥ २०६ ॥
ओखिप्पइ मण्डलमारुएण गेहङ्गणाउ वाहीए ।
सोहग्गधयवडाइ व्व धणुरओ रुम्परिञ्छोली ॥ २०७ ॥
जह जह वड्ढन्ति थणा तह तह झिज्जन्ति पञ्चवत्थूणि ।
मज्झं पइ कोयण्डं पत्तिजुवाणा सवत्तीओ ॥ २०८ ॥

## सिंहपद्धतिः

किं करोति कुरङ्गी बहुसुतैर्व्यवमायमानरहितैः ।
एकेनापि गजघटदारणेन सिंही सुखं स्वपिति ॥ २०० ॥
जातिविशुद्धेभ्यो नमस्तेभ्यो मृगेन्द्रेभ्योऽत्र जीवलोके ।
ये ये कुले जातास्ते ते गजकुम्भनिर्दलनाः ॥ २०१ ॥
मा जानीत यदि तुङ्गत्वेन पुरुषाणां भवति शौण्डीर्यं ।
लघुरपि मृगेन्द्रः करिवराणां कुम्भस्थलं दारयति ॥ २०२ ॥
उभयेऽप्यरण्योत्पन्ना बध्यन्ते गजा नैव केसरिणः ।
संभाव्यते मरणं न गञ्जनं धीरपुरुषाणां ॥ २०३ ॥

## व्याधपद्धतिः

एकशरप्रहारदारितमृगेन्द्रगजेन्द्रयुद्धे प्रवृत्ते ।
व्याधि न लज्जसे नृत्यसि दौर्भाग्ये प्रकटीक्रियमाणे ॥ २०४ ॥
कुतस्तद्राजगृहेषु विलसितं यद्गृहे व्याधस्य ।
गजकुम्भविदारितमौक्तिकैर्यत्खल्वलं क्रीयते ॥ २०५ ॥
अद्य कृतार्थो दिवसो व्याधवधू रूपयौवनोन्मत्ता ।
सौभाग्यं धनुरुल्लिखनच्छलेन रथ्यासु विकिरति ॥ २०६ ॥
अहो च्रियते मण्डलीमारुतेन गेहाङ्गणाद्व्याधवध्वाः ।
सौभाग्यध्वजपताकेव धनूरजस्त्वक्पङ्क्तिः ॥ २०७ ॥
यथा यथा वर्धते स्तनौ तथा तथा क्षीयन्ते पञ्चवस्तूनि ।
मध्यं पतिः कोदण्डं पल्लियुवानः सपत्न्यः ॥ २०८ ॥

जह जह वड्ढन्ति थणा वित्थरइ मयणो मवसद्धा दिट्ठी ।
तह तह वाहजुवाणो दियहे दियहे घणुं खिवइ ॥ २०९ ॥
जह जह न चडइ चावो उक्खिवइ करइ पत्तिणाइस्स ।
तह तह सुण्हा विप्फुल्लगण्डविवरमुही हसइ ॥ २१० ॥
दिन्नं थणाण अग्घं करिणीजूहेण वाहवहुयाए ।
रण्डत्तणं न पत्तं हे सुन्दरि तुह पसाएणं ॥ २११ ॥
सिहिपेहुणावयंसा वहुया वाहस्स गव्विरी भमइ ।
गयमुत्तागहियपसाहणाण मज्झे सवत्तीणं ॥ २१२ ॥
वाणियय हत्थिदन्ता कत्तो अम्हाण वग्घकित्तीओ ।
उत्तुङ्गथोरथणवट्टसालसा जं वहू सुवइ ॥ २१३ ॥
वग्घाण नहा सीहाण केसरा मोत्तिया गइन्दाणं ।
कत्तो वाणिय अम्हं मयचम्मपरिग्गहो नत्थि ॥ २१४ ॥

## हरिणवज्जा

हरिणा जाणन्ति गुणा रसे वमिऊण गेयमाहप्पं ।
ताणं चिय नत्थि धणं जीयं वाहस्स अप्पन्ति ॥ २१५ ॥
अम्हाण तिणङ्कुरभोयणाण न हु किं पि संचियं दविणं ।
मह मंसपिण्डतुट्ठो जइ वच्चइ ता अहं धन्नो ॥ २१६ ॥
एक्केण वि सरउ सरेण वाह किं बीयएण गहिएण ।
एक्कं पि वसइ जीयं हयास दोहिं पि य सरीरे ॥ २१७ ॥
सरसल्लिएण भणियं कन्नं धुणिऊण जुयहरिणेण ।
णिज्झउ पुणो वि णिज्झाउ जाव य कण्ठट्ठिओ जीवो ॥ २१८ ॥

यथा यथा वर्धेते स्तनौ विकसति मदनः समन्मथा दृष्टिः ।
तथा तथा व्याधयुवा दिवसे दिवसे धनुरुल्लिखति ॥ २०९ ॥
यथा यथा न चटति चापो भ्रश्यते करात्पल्लिनाथस्य ।
तथा तथा स्नुषा विस्फारदण्डविपराङ्मुखी हसति ॥ २१० ॥
दत्तं स्तनयोरर्घं करिणीयूथेन व्याधवध्वाः ।
रण्डात्वं न प्राप्तं हे सुन्दरि तव प्रसादेन ॥ २११ ॥
शिखिपिच्छावतंसा वधूर्व्याधस्य गर्वमती भ्राम्यति ।
गजमुक्ताग्टहीतप्रसाधनानां मध्ये सपत्नीनां ॥ २१२ ॥
वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्त्यः ।
उत्तुङ्गपृथुस्तनपृष्ठसालसा यद्वधूः स्वपिति ॥ २१३ ॥
व्याघ्राणां नखाः सिंहानां केसरा मौक्तिकानि गजेन्द्राणां ।
कुतो वाणिजास्माकं म्टगचर्मपरिग्रहो नास्ति ॥ २१४ ॥

## हरिणपद्धतिः

हरिणा जानन्ति गुणानरण्य उषिता गेयमाहात्म्यं ।
तेषामेव नास्ति धनं जीवं व्याधस्यार्पयन्ति ॥ २१५ ॥
अस्माकं तृणाङ्कुरभोजनानां न खलु किमपि संचितं द्रविणं ।
मम मांसपिण्डतुष्टो यदि व्रजति तदाहं धन्यः ॥ २१६ ॥
एकेनापि पूर्यतां शरेण व्याध किं द्वितीयेन ग्टहीतेन ।
एकमपि वसति जीवं हताश द्वयोरपि च शरीरे ॥ २१७ ॥
शरशल्यितेन भणितं स्कन्धं धूत्वा जीर्णहरिणा ।
गीयतां पुनर्गीयतां यावच्च कण्ठस्थितो जीवः ॥ २१८ ॥

*घाएण मग्गो सद्देण मई चोज्जेण वाहवड्डया वि ।*
अवठम्भिऊण धणुहं वाहेण वि मुक्किया पाणा ॥ २१९ ॥

## करहवज्जा

कङ्केल्लिपल्लवो वेल्लमणहरे जइ वि नन्दणे चरइ ।
करहस्स तह वि मरुविलसियाइ हियए खडुक्कन्ति ॥ २२० ॥
ते गिरिसिहरा ते पीलुपल्लवा ते करीरकसरक्का ।
लब्भन्ति करह मरुविलसियाइ कत्तो वणेत्थम्मि ॥ २२१ ॥
पुणरुत्तपसारियदीहकन्धरो करह किं पलोएसि ।
कत्तो लब्भन्ति मरुत्थलीउ दिव्वे पराहुत्ते ॥ २२२ ॥
दीहुण्हपउरनीसाससोसियासेसपीलुसयसिहरे ।
कवलं पि न गेण्हसि करह मुद्ध किं चक्खियमउव्वं ॥ २२३ ॥
उन्नयकन्धर मा जूर करह ता धरसु किंचि चरिऊण ।
तुह जोग्गा अक्कमरुत्थलीउ तुङ्गा तरू कत्तो ॥ २२४ ॥
जं जीहाए विलग्गं किंचि वरं मासि तस्स तं दिट्ठं ।
थुक्केइ चक्खिउं वण-सयाइ करहो धुयग्गीवो ॥ २२५ ॥
अन्नेहिं पि न पत्ता पत्तलकरहेहि करह सा वेल्ली ।
को एसो तुज्झ गहो जं चिन्तसि विज्झसिहराइं ॥ २२६ ॥

## मालईवज्जा

तइ तुह विरहे मालइ महिमण्डलवन्दणिज्जमयरन्दे ।
परिझीणं भमरउलं जह जायं ससयवन्दं व ॥ २२७ ॥

*घातेन मृगो शब्देन मृग्याश्चर्येण व्याधवधूरपि ।*
*अवष्टभ्य धनुर्व्याधेनापि मुक्ताः प्राणाः ॥ २१९ ॥*

## करभपद्धतिः

कङ्केल्लिपल्लवो विलमनोहरे यद्यपि नन्दने चरति ।
करभस्य तथापि मरुविलसितानि हृदय आविर्भवन्ति ॥ २२० ॥
तानि गिरिशिखराणि ते पिलुपल्लवास्ते करीरकुड्मलाः ।
लभ्यन्ते करभ मरुविलसितानि कुतो वनेऽत्र ॥ २२१ ॥
पुनरुक्तप्रसारितदीर्घकन्धरः करभ किं प्रलोकयसि ।
कुतो लभ्यन्ते मरुस्थल्यो दैवे पराङ्मुखे ॥ २२२ ॥
दीर्घोष्णप्रचुरनिःश्वासशोषिताशेषपीलुशतशिखरे ।
कवलमपि न गृह्णासि करभ मुग्ध किमास्वादितमपूर्वं ॥ २२३ ॥
उन्नतकन्धर मा खिद्यस्व करभ तस्माद्दूरस्थ किंचिच्चरित्वा ।
तव योग्या अर्कमरुस्थल्यस्तुङ्गास्तरवः कुतः ॥ २२४ ॥
यज्जिह्वायां विलग्नं किंचिदरं मासि तस्य तद्दृष्टं ।
थूत्करोत्यास्वादयितु वनशतानि करभो धुतग्रीवः ॥ २२५ ॥
अन्यैरपि न प्राप्ता कृशकरभैः करभ मा वल्ली ।
क एष तव ग्रहो यच्चिन्तयसि विन्ध्यशिखराणि ॥ २२६ ॥

## मालतीपद्धतिः

तथा तव विरहे मालति महीमण्डलवन्दनीयमकरन्दे ।
परिक्षीणं भ्रमरकुलं यथा जातं मशकवृन्दमिव ॥ २२७ ॥

वड्ढसु मालइकलिए निब्भरमयरन्दपरिमलुग्गारे ।
मुञ्चन्तु छप्पया सेसकुसुमसेवाकिलेसस्स ॥ २१८ ॥
वियसन्तु नाम गन्धुद्धुराउ सेसाउ कुसुमजाईओ ।
इन्दिन्दिरस्स रणरणयकारणं मालई चेव ॥ २१९ ॥
मउइं मालइकलियं महुयर दट्ठूण किं पराहुत्तो ।
एत्तो पसरइ भुवणन्तराइ गन्धो वियसन्तो ॥ २२० ॥
महुलिहियाए किं तुह इमीए किं वा दलेहि तलिणेहिं ।
आमोए महुयर मालईए जाणिहिसि माहप्पं ॥ २२१ ॥
तह वासियं वणं मालईए कुसुमेहि निब्भरं सरए ।
जह इत्थ तत्थ कत्थवि भमरा दुक्खेहि लक्खन्ते ॥ २२२ ॥
का समसीसी सह मालईए सेसाण कुसुमजाईणं ।
जस्सा वि गन्धविलित्ता भसला भसलेहि पिज्जन्ति ॥ २२३ ॥
कलियामिसेण उब्भेवि अङ्गुलिं मालईए महमहियं ।
धरउ जु धरणसमत्थो मह एत्तो महुयरजुवाणो ॥ २२४ ॥
पक्खुक्खेवं नहसूइखण्डणं भमरभरसमुव्वहणं ।
उय सहइ थरहरन्तो त्ति दुव्वला मालई चेव ॥ २२५ ॥

## इन्दिन्दिरवज्जा ।

इन्दिन्दिर छप्पय भसल भमर भमिओ सि काणणं सयलं ।
मालइसरिसं कुसुमं जइ दिट्ठं किं न ता भणसि ॥ २२६ ॥
कत्थ वि दलं न गन्धं कत्थ वि गन्धो न पउरमयरन्दो ।
एक्ककुसुमम्मि महुयर बे तिण्णि गुणा न लब्भन्ति ॥ २२७ ॥

वर्धस्व मालतीकलिके निर्भरमकरन्दपरिमलोद्गारे।
मुञ्चन्तु षट्पदाः शेषकुसुमसेवाभियोगात् ॥ २२८॥
विकसन्तु नाम गन्धोद्धुराः शेषाः कुसुमजातयः।
इन्दिन्दिरस्य रणरणककारणं मालत्येव ॥ २२९॥
लक्ष्मीं मालतीकलिकां मधुकर दृष्ट्वा किं पराङ्मुखः।
इतः प्रसरति भुवनान्तराणि गन्धो विजृम्भमाणः ॥ २३०॥
लघुतया किं तवैतस्याः किं पत्रैस्तलिनैः।
आमोदे मधुकर मालत्या ज्ञास्यसि माहात्म्यं ॥ २३१॥
तथा वासितं वनं मालत्याः कुसुमैर्निर्भरं शरदि।
यथात्र तत्र कुत्रापि भ्रमरा दुःखैर्लङ्घ्यन्ते ॥ २३२॥
का प्रतिस्पर्धा सह मालत्या शेषाणां कुसुमजातीनां।
यस्यापि गन्धविलिप्ता भ्रमरा भ्रमरैः पीयन्ते ॥ २३३॥
कलिकामिषेणोर्ध्वीकृत्याङ्गुलिं मालत्या कथितं।
धारयत यो धरणसमर्थो माम् प्रत्यागच्छन्तं मधुकरयुवानं ॥२३४॥
पत्रोत्क्षेपं नखसूचिखण्डनं भ्रमरभरसमुद्वहनं।
पश्य सहते कम्पमानापि दुर्बला मालत्येव ॥ २३५॥

## इन्दिन्दिरपद्धतिः।

इन्दिन्दिर षट्पद भसल भ्रमर भ्रान्तोऽसि काननं सकलं।
मालतीसदृशं कुसुमं यदि दृष्टं किं न तदा भणसि ॥ २३६॥
कुत्रापि दलं न गन्धः कुत्रापि गन्धो न प्रचुरमकरन्दः।
एककुसुमे मधुकर द्वौ त्रयो गुणा न लभ्यन्ते ॥ २३७॥

एक्कं महुअरहिययं　तं च्चिय पुण मालईए पडिबद्धं ।
सेसा फुल्लन्तु फलन्तु पायवा को निवारेइ ॥ २३८ ॥

मालइ पुणो वि मालइ　हा मालइ मालइ त्ति जम्पन्तो ।
उव्विग्गो भमइ अली　हिण्डन्तो सयलवणराई ॥ २३९ ॥

रुणरुणइ वलइ वेल्लइ　पक्खउडं धुणइ खिवइ अङ्गाइं ।
मालइकलियाविरहे　पञ्चावत्थं गओ भमरो ॥ २४० ॥

मालइविरहे रे तरुणभसल मा रुवसु निब्भरुक्कण्ठं ।
वल्लहविओयदुक्खं　मरणेण विणा न वीसरइ ॥ २४१ ॥

जाव न वियसइ सरसा　वरइ न ईसं पि मालईकलिया ।
अविणीयमहुयरेहिं　ताव च्चिय पाउमारद्धा ॥ २४२ ॥

वियसन्तमरसतामरसभसल वियसेइ मालई जाव ।
ता जत्थ व तत्थ व जह　व तह व दियहा गमिज्जन्ति ॥ २४३ ॥

कुप्पय गमेसु कालं　वासवकुसुमाइ ताव मा मुयसु ।
मन्न जियन्तो पेच्छसि　पउरा रिद्धी वसन्तस्स ॥ २४४ ॥

मा इन्दिन्दिर तुङ्गसु　पङ्कयदलनिलय मालईविरहे ।
तुम्भिणिकुसुमाइ न सं-पडन्ति दिव्वे पराहुत्ते ॥ २४५ ॥

इयरकुसुमेसु महुयर　दे बन्ध रइं विमुञ्च रणरणयं ।
झायन्तो च्चिय मरिहिसि　कत्तो ते मालई सरए ॥ २४६ ॥

भमरो भमरो त्ति गुणोज्झिएहि कुसुमेहि लाइओ दोसो ।
लहिऊण मालइं पुण　सो निउणो भमउ जइ भमइ ॥ २४७ ॥

कुन्दलयामउलपरिट्ठिएण भरिऊण मालइविलासं ।
तह नीससियं इन्दिन्दिरेण जह सा वि पज्जलिया ॥ २४८ ॥

एकं मधुकरहृदयं तदेव पुनर्मालत्या प्रतिबद्धं।
शेषाः फुल्लन्तु फलन्तु पादपाः को निवारयति ॥ १३८ ॥
मालति पुनरपि मालति हा मालति मालतीति जल्पन्।
उद्विग्नो भ्रमत्यलिर्हिण्डमानः सकलवनराजीः ॥ १३९ ॥
रणरणायते वलति वेल्लति पत्रपुटं धुनोति चिपत्यङ्गानि।
मालतीकलिकाविरहे पश्चावस्थां गतो भ्रमरः ॥ १४० ॥
मालतीविरहे रे तरुणभ्रमर मा रोदीर्निर्भरोत्कण्ठं।
वल्लभवियोगदुःखं मरणेन विना न विस्मर्यते ॥ १४१ ॥
यावन्न विकसति सरसा शृणोति नेषदपि मालतीकलिका।
अविनीतमधुकरैस्तावदेव पातुमारब्धा ॥ १४२ ॥
विकसत्सरसतामरसभ्रमर विकसति मालती यावत्।
तावदत्र वा तत्र वा यथा वा तथा वा दिवसा नीयन्ते ॥ १४३ ॥
षट्पद गमयस्व कालं वासवकुसुमानि तावन्मा मुञ्च।
मन्ये जीवन् पश्यसि प्रचुरद्रूर्विसन्तस्य ॥ १४४ ॥
मेन्दिन्दिर भ्राम्य पङ्कजदलनिलय मालतीविरहे।
तुम्बिनीकुसुमानि न संपतन्ति दैवे पराङ्मुखे ॥ १४५ ॥
इतरकुसुमेषु मधुकर हे बध्न रतिं विमुञ्च रणरणकं।
ध्यायन्नेव मरिष्यसि कुतस्ते मालती शरदि ॥ १४६ ॥
भ्रमरो भ्रमर इति गुणोज्झितैः कुसुमैरारोपितो दोषः।
लब्ध्वा मालतीं पुनः स निपुणो भ्रमतु यदि भ्रमति ॥ १४७ ॥
कुन्दलतामुकुलपरिस्थितेन स्मृत्वा मालतीविलासं।
तथा निःश्वसितमिन्दिन्दिरेण यथा सापि प्रज्वलिता ॥ १४८ ॥

वोसट्टवहलपरिमल—केयइमयरन्दवासियङ्गस्स ।
वियइल्लियपियलम्भा चिरा सया कस्स जायन्ति ॥ २४९ ॥
वियलियदलं पि गन्धोज्झियं पि विरसं पि मालईविडवं ।
भमरेहि नेय मुक्कं पढमरसं संभरन्तेहिं ॥ २५० ॥
ढङ्कुरसेसो वि हु महुयरेहि मुक्को न मालईविडवो ।
दरवियसियकलियामोयबहलिमं संभरन्तेहिं ॥ २५१ ॥
निविडदलसंठियं पि हु कलियं वियसाविऊण सविसेसं ।
जे पढमं तीए रसं पियन्ति ते कप्पया केया ॥ २५२ ॥

## सुरतरुविवेसवज्जा ।

वसिऊण सग्गलोए गन्धं गहिऊण पारिजायस्स ।
रे भसल किं न लज्जसि चुम्बन्तो इयरकुसुमाइं ॥ २५३ ॥
कत्तो लवङ्गकलिया इच्छं पूरेइ केयभसलस्स ।
अमरतरुमञ्जरिरसेण जस्स आणन्दियं हियय़ं ॥ २५४ ॥
भमर भमन्तेण तए अणेयवणगहणकाणणुद्देसं ।
दिट्ठो सुओ य कत्थ वि सरिसतरू पारिजायस्स ॥ २५५ ॥
अमरतरुकुसुममञ्जरि वाउहया महुयरेण जं रसिया ।
तप्पढुरसेण कओ संकप्पो सेसकुसुमाणं ॥ २५६ ॥

## हंसवज्जा ।

हंसो सि महासरमण्डणो सि धवलो सि धवल किं तुज्झ ।
खलवायसाण मज्झे ता हंसय कत्थ पडिओ सि ॥ २५७ ॥

विकसितबहलपरिमलकेतकीमकरन्दवासिताङ्गस्य ।
हृदयेष्टप्रियलम्भाश्चिराः सदा कस्य जायन्ते ॥ २४९ ॥
विगलितदलमपि गन्धोज्झितमपि विरसमपि मालतीविटपं ।
भ्रमरैर्नैव मुक्तं प्रथमसरं संस्मरद्भिः ॥ २५० ॥
ध्वाङ्क्षरसेषोऽपि खलु मधुकरैर्मुक्तो न मालतीविटपः ।
दरविकसितकलिकामोदवाञ्छ्यं संस्मरद्भिः ॥ २५१ ॥
निविडदलसंस्थितामपि खलु कलिकां विकास्य सविशेषं ।
ये प्रथमं तस्या रसं पिबन्ति ते षट्पदाश्छेकाः ॥ २५२ ॥

## सुरतरुविशेषपद्धतिः ।

उषिता स्वर्गलोके गन्धं गृहीत्वा पारिजातस्य ।
रे भ्रमर किं न लज्जसे चुम्बनितरकुसुमानि ॥ २५३ ॥
कुतो लवङ्गकलिकेच्छां पूरयति छेकभ्रमरस्य ।
अमरतरुमञ्जरीरसेन यस्यानन्दितं हृदयं ॥ २५४ ॥
भ्रमर भ्राम्यता त्वयानेकवनगहनकाननोद्देशं ।
दृष्टः श्रुतश्च कुत्रापि सदृक्तरुः पारिजातस्य ॥ २५५ ॥
अमरतरुकुसुममञ्जरी वायुहृता मधुकरेण यद्रसिता ।
तल्लब्धरसेन कृतः संकल्पः शेषकुसुमानां ॥ २५६ ॥

## हंसपद्धतिः ।

हंसोऽसि महासरमण्डनमसि धवलोऽसि धवल किं तव ।
खलवायसानां मध्ये तस्माद्धंस कुतः पतितोऽसि ॥ २५७ ॥

हंसो मसाणमज्झे काओ जइ वसइ पङ्कयवणम्मि ।
तह वि हु हंसो हंसो काओ काओ च्चिय वराओ ॥ २५८
अहिणवपाणउच्छलिया सवित्थरा जइ वि पाउसवसेण ।
तह वि हु किं सेविज्जइ वाहलिया रायहंसेहिं ॥ २५९ ॥
वे वि सपक्खा तह वे वि धवलया वे वि सरवरनिवासा ।
तह वि हु हंसवयाणं जाणिज्जइ अन्तरं गरुयं ॥ २६० ॥
सवनलिणमुणालुक्कोलमालियं हंस माणसं मोत्तुं ।
लज्जाए कह न मूओ सेवन्तो गामवाहलियं ॥ २६१ ॥
एक्केण य पासपरिट्ठिएण हंसेण होइ जा सोहा ।
तं सरवरो न पावइ बहुएहि वि ढेङ्कसत्थेहिं ॥ २६२ ॥
माणससररहियाणं जह न सुहं होइ रायहंसाणं ।
तह तस्स वि तेहि विणा तीरुच्छङ्गा न सोहन्ति ॥ २६३ ॥

## चन्दवज्जा ।

सव्वायरेण रक्खह तं पुरिसं जत्थ जयसिरी वसइ ।
अत्थमिय चन्दबिम्बे ताराहि न कीरए जोण्हा ॥ २६४ ॥
जह जह वड्ढेइ ससी तह तह ओ पेच्छ घेप्पइ मएण ।
वयणिज्जवज्जियाओ कस्स वि जइ हुन्ति रिद्धीओ ॥ २६५ ॥
जइ चन्दो किं बहुतारएहि बहुएहि किं च तेण विणा ।
जस्स पयासो लोए धवलेइ महामहीवट्ठं ॥ २६६ ॥
चन्दस्स खओ न हु तारयाण रिद्धी वि तस्स न हु ताणं ।
गरुयाण चडणपडणं इयरा उण निच्च पडिया य ॥ २६७ ॥

हंसः श्मशानमध्ये काको यदि वसति पङ्कजवने।
तथापि खलु हंसो हंसः काकः काक एव वराकः॥ २५८॥
अभिनवघनोच्छलिता सविस्तरा यद्यपि प्रावृड्रसेन।
तथापि खलु किं सेव्यते क्षुद्रनदी राजहंसैः॥ २५९॥
द्वावपि सपक्षौ तथा द्वावपि धवलौ द्वावपि सरोवरंनिवासौ।
तथापि खलु हंसबकयोर्ज्ञायतेऽन्तरं गुरुकं॥ २६०॥
नवनलिनमृणाललोललोलमालितं हंस मानसं मुक्त्वा।
लज्जया कथं न मृतः सेवमानो ग्रामक्षुद्रनदीं॥ २६१॥
एकेन च पार्श्वपरिस्थितेन हंसेन भवति या शोभा।
तां सरोवरो न प्राप्नोति बहुभिरपि ढेङ्कसार्थैः॥ २६२॥
मानससरोरहितानां यथा न सुखं भवति राजहंसैः।
तथा तस्यापि तैर्विना तीरुत्सङ्गा न शोभन्ते॥ २६३॥

## चन्द्रपद्धतिः।

सर्वादरेण रक्षत तं पुरुषं यत्र जयश्रीर्वसति।
अस्तमिते चन्द्रबिम्बे ताराभिर्न क्रियते ज्योत्स्ना॥ २६४॥
यथा यथः वर्धते शशी तथा तथाहो पश्य गृह्यते मृगेण (मदेन)
वचनीयवर्जिताः कस्यापि यदि भवन्त्यृद्धयः॥ २६५॥
यदि चन्द्रः किं बहुतारकैर्बहुभिः किं च तेन विना।
यस्य प्रकाशो लोके धवलयति महामहीपृष्ठं॥ २६६॥
चन्द्रस्य क्षयो न खलु तारकाणामृद्धिरपि तस्य न खलु तेषां।
गुरुकाणां चटनपतनमितरे पुनः नित्यं पतिता एव॥ २६७॥

रयणायरम्मि जम्मो हरसिरतिलओ सहोयरा लच्छी ।
विहडियकलाकलावो दूसिया वि समीहए चन्दो ॥ २६८ ॥
हरसिरसरणम्मि गओ लुक्कन्तो तह जडाण मज्झम्मि ।
तह वि गिलिज्जइ चन्दो विहिविहियं को निवारेइ ॥२६९ ॥

## छइल्लवज्जा ।

नयरं न होइ अट्टालएहि पायारतुङ्गसिहरेहिं ।
गामो वि होइ नयरं जत्थ छइल्लो जणो वसइ ॥ २७० ॥
निवसन्ति जत्थ छेया ललियक्खरकव्वबन्धणे कुसला ।
जाणन्ति वङ्कभणियं सुन्दरि नयरं न सो गामो ॥२७१ ॥
जो जम्पिऊण जाणइ जम्पियमत्तं च जाणए अत्थं ।
देसो तेण पवित्तो अच्छउ नयरं वसन्तेण ॥ २७२ ॥
गुरुविहवलच्छिया अवि आवइ पत्ता वि आउरमणा वि ।
सिविणन्तरे वि छेया नियकज्जं नेय सिढिलन्ति ॥ २७३ ॥
अन्नं धरन्ति हियए अन्नं वायाए कीरए अन्नं ।
छेयाण पत्थिवाण य खलाण मग्गो च्चिय अउव्वो ॥ २७४ ॥
छेयाण जेहि कज्जं न हु होसइ जेहि जम्मलक्खे वि ।
देहिं पि तेहि सरिसं–सरिस च्चिय हुन्ति उल्लावा ॥ २७५ ॥
सब्भाववाहिरेहिं तह कह वि पियक्खरेहि जम्पन्ति ।
जह बंभव त्ति कलिउं लोए सीसेहि वुब्भन्ति ॥ २७६ ॥
दिट्ठीतुलाए भुवणं तुलन्ति जे चित्तचेलए निहियं ।
को ताण छेयवाणिज्जयाण भण खण्डणं कुणइ ॥ २७७ ॥

रत्नाकरे जन्म हरशिरस्तिलकः सहोदरा लक्ष्मीः।
विघटितकलाकलापो दशामपि समीहते चन्द्रः॥ २६८॥
हरशिरःशरणे गतो निलयंस्तथा जटानां मध्ये।
तथापि गिल्यते चन्द्रो विधिविहितं को निवारयति॥ २६९॥

## विदग्धपद्धतिः।

नगरं न भवत्यट्टालिकाभिः प्राकारतुङ्गशिखरैः।
ग्रामोऽपि भवति नगरं यत्र विदग्धो जनो वसति॥ २७०॥
निवसन्ति यत्र छेका ललिताक्षरकाव्यबन्धने कुशलाः।
जानन्ति वक्रभणितं सुन्दरि नगरं न स ग्रामः॥ २७१॥
यो जल्पितुं जानाति जल्पितमात्रं च जानात्यर्थं।
देशस्तेन पवित्र आस्तां नगरं वसता॥ २७२॥
गुरुविभवलङ्घिता अप्यापदं प्राप्ता अप्यातुरमनसोऽपि।
स्वप्नान्तरेऽपि छेका निजकार्यं नैव शिथिलयन्ति॥ २७३॥
अन्यद्धरन्ति हृदयेऽन्यद्दाचि क्रियतेऽन्यत्।
छेकानां पार्थिवानां च खलानां मार्ग एवापूर्वः॥ २७४॥
छेकानां यैः कार्यं न खलु भविष्यति येर्जन्मशतेऽपि।
द्वयोरपि तयोः सदृशंसदृशा एव भवन्त्युल्लापाः॥ २७५॥
सद्भाववर्जितैर्धूर्तैस्तथा कथमपि प्रियाचरैर्जल्पन्ति।
यथा बान्धवा इति कलिता लोके शिरोभिरुह्यन्ते॥ २७६॥
दृष्टतुलया भुवनं तुलयन्ति ये चित्ततुलापात्रे निहितं।
कस्तेषां छेकवणिजां भण खण्डनं करोति॥ २७७॥

तं नत्थि तं न हुयं न हु होसइ जं च तिहुयणे सयले ।
तं विहिणा वि न विहियं जं न हु नायं छइल्लेहिं ॥ २७८ ॥

जह पढमदिणे तह पच्छिमम्मि फरुसाइ नेय जम्पन्ति ।
अव्वो महाणुभावा विरज्जमाणा वि दुल्लक्खा ॥ २७९ ॥

बहुकूडकवडभरियाण पुत्ति छेयाण जो पिडे पडइ ।
सो सुव्वो सुहमणो सिविणे वि न पावए सुक्खं ॥ २८० ॥

जइ कहवि ताण छप्पययाण तणुयङ्गि गोयरे पडसि ।
ता घोरवयहदाहेक्कमण्डिया दुक्करं जियसि ॥ २८१ ॥

मा पुत्ति वङ्कवङ्कं जम्पसु पुरओ छइल्ललोयाणं हियए ।
जं च निहित्तं तं पि हयासा मुणन्ति सबुद्धीए ॥ २८२ ॥

लीलावलोयणेण वि मुणन्ति जे पुत्ति हिययपरमत्थं ।
ते कारिमउवयारेहि कह नु छेया छलिज्जन्ति ॥ २८३ ॥

सहसत्ति जं न दिट्ठो सरलसहावेहि जं न आलत्तो ।
उवयारो जं न कओ तं चिय कलियं छइल्लेहिं ॥ २८४ ॥

## पञ्चमवज्जा ।

कण्ठभन्तरनिग्गय — दरघोलिरघुरहुरन्तहुङ्कारं ।
खलिरक्खरं पि मारइ पन्थिय मा पञ्चमं सुणसु ॥ २८५ ॥

घोलन्ततारवसुज्जलेण वरतरुणिकंठलग्गेण ।
लोयणजुयलेण व पञ्चमेण भण को न संतविओ ॥ २८६ ॥

अन्ने वि गामराया गिज्जन्ता देन्ति सयलसोक्खाइं ।
एयस्स पुणो हयपञ्चमस्स अन्नो चमक्कारो ॥ २८७ ॥

तन्नास्ति तन्न भूतं न खलु भविष्यति यत्त्रिभुवने सकले।
तद्विधिनापि न विहितं यन्न खलु ज्ञातं विदग्धैः॥ २७८॥
यथा प्रथमदिने तथा पश्चिमे परुषाणि नैव जल्पन्ति।
अहो महानुभावा विरज्यमाना अपि दुर्लक्ष्याः॥ २७९॥
बककूटकपटभृतानां पुत्रि छेकानां यः पिण्डे पतति।
स शून्यः शून्यमनाः स्वप्नेऽपि न प्राप्नोति सुखं॥ २८०॥
यदि कथमपि तेषां षट्प्रज्ञानां तन्वङ्गि गोचरे पतसि।
तदोत्कृष्टवृषभदाहैकमण्डिता दुष्करं जीवसि॥ २८१॥
मा पुत्रि वक्रवक्रं जल्प पुरतश्छेकलोकानां हृदये।
यच्च निहितं तदपि हताशा जानन्ति स्वबुद्ध्या॥ २८२॥
लीलावलोकनेनापि जानन्ति ये पुत्रि हृदयपरमार्थं।
ते कृत्रिमोपकारैः कथं नु छेकाश्छल्यन्ते॥ २८३॥
सहसा यस्य दृष्टः सरलस्वभावेन यस्मालपितः।
उपकारो यस्य कृतस्तदेव कलितं छेकैः॥ २८४॥

## पञ्चमपद्धतिः।

कण्ठाभ्यन्तरनिर्गतदरघूर्णमानघुरघुरायमानझङ्कारं।
स्खलिताक्षरमपि मारयति पथिक मा पञ्चमं श्रावीः॥ २८५॥
घूर्णमानतारवर्णोज्ज्वलेन वरतरुणीकर्णलग्नेन।
लोचनयुगलेनेव पञ्चमेन भण को न संतापितः॥ २८६॥
अन्येऽपि ग्रामरागा गीयमाना ददति सकलसौख्यानि।
एतस्य पुनो हतपञ्चमस्यान्यश्चमत्कारः॥ २८७॥

अण्णणकज्जेण वि दीहरच्छि थोरथरदीहरणरणया ।
पञ्चमसरपसरुग्गारगब्भिणा एन्ति नीसासा ॥ २८८ ॥
तं वच्चिओ सि पियथम तीए वाहोहसंवलिज्जन्ता ।
न सुया नीसाससलन्तमन्थरा पञ्चमतरङ्गा ॥ २८९ ॥
सुणइ पञ्चमगेयं पुज्जिज्जइ वसहवाहणो देवो ।
हिययच्छिओ रमिज्जइ संसारे इत्तियं सारं ॥ २९० ॥

## नयणवज्जा ।

नयणाइ समाणियपत्तलाइ परपुरिसजीवहरणाइं ।
असियसियाइ य मुद्धे खग्गाइ व कं न मारन्ति ॥ २९१ ॥
जत्तो नेहस्स भरो तत्तो निवडन्ति कसणधवलाइं ।
चलवलयकोडिमोडण — कराइ नयणाइ तरुणीणं ॥ २९२ ॥
सवियारसविब्भमरहसवसविसट्टन्तमणहरद्धामा ।
मयणाउलाण दिट्ठी लक्खिज्जइ लक्खमज्झम्मि ॥ २९३ ॥
जत्तो विलोलपम्हल — धवलाइ चलन्ति नवर नयणाइं ।
आयण्णपूरियसरो तत्तो च्चिय धावइ अणङ्गो ॥ २९४ ॥
कस्स न भिन्दइ हिययं अणङ्गसरधोरणि व्व निवडन्ती ।
बालाए वलियलोयण — फुरन्तमयणालसा दिट्ठी ॥ २९५ ॥
नयणाइ तुज्झ सुन्दरि विसेण-भरियाइ निरवसेसाइं ।
एमइ मारेइ जणं अलज्जि किं कज्जलं देहि ॥ २९६ ॥
ईसीसिदिन्नकज्जल — नीलुप्पलसच्छहेहि नयणेहिं ।
वम्महमत्ता बाला मइया इव भमइ उत्तट्ठा ॥ २९७ ॥

आत्मकार्येणापि दीर्घाक्षि विस्तीर्णतरदीर्घरणरणकाः।
पञ्चमस्वरप्रसरोद्गारगर्भिता आयान्ति निःश्वासाः ॥ २८८ ॥
त्वं वञ्चितोऽसि प्रियतम तस्या बाष्पौघसंवल्यमानाः।
न श्रुता निःश्वासस्खलन्मन्थराः पञ्चमतरङ्गाः ॥ २८९ ॥
श्रूयते पञ्चमगेयं पूज्यते वृषभवाहनो देवः।
हृदयेप्सितो रम्यते संसारैतावत्सारं ॥ २९० ॥

## नयनपद्धतिः।

नयने समानिततीक्ष्णे(०णौ) परपुरुषजीवहरणे(०णौ)।
असितसिते(०सितौ च मुग्धे खड्गाविव कं न मारयतः ॥ २९१ ॥
यत्र नेत्रस्य भरस्तत्र निपतन्ति कृष्णधवलानि।
चञ्चलकोटिमोटनकराणि नयनानि तरुणीनां ॥ २९२ ॥
सविकारसविभ्रमरभसवशविकसन्मनोहरोद्दामा।
मदनाकुलानां दृष्टिर्लक्ष्यते लक्षमध्ये ॥ २९३ ॥
यतो विलोलपक्ष्मलधवलानि चलन्ति नवरं नयनानि।
आकर्णपूरितशरस्तत एव धावत्यनङ्गः ॥ २९४ ॥
कस्य न भिनत्ति हृदयमनङ्गशरधोरणीव निपतन्ती।
बालाया वलितलोचनस्फुरन्मदनालसा दृष्टिः ॥ २९५ ॥
नयने तव सुन्दरि विषेण भृते निरवशेषे।
एवमेव मारयतो जनमलक्ष्ये किं कज्जलं ददासि ॥ २९६ ॥
ईषदीर्घवृत्तकज्जलनीलोत्पलसदृक्षाभ्यां नयनाभ्यां।
मन्मथमत्ता बाला मृगीव भ्रमत्युत्त्रस्ता ॥ २९७ ॥

वड्डेहि पिओ सरलेहि सज्जणो उज्जुएहि मज्झत्थो
आयम्बिरेहि रिउणो नयणाइ चउव्विहा हुन्ति ॥ २९८ ॥

नयणाण पडउ वज्जं अहवा वज्जाउ वड्डिलं किं पि ।
असुणियजणे वि दिट्ठे अणुरायं जाइ पावन्ति ॥ २९९ ॥

धावन्ति तम्मुहं धारिया वि वलियाइ तम्मि वलमाणे ।
अणवङ्कुले वि नच्चावियाइ तेणम्ह नयणाइं ॥ ३०० ॥

## थणवज्जा ।

ठड्ढा खलो व्व सुयणो व्व संगया नरवइ व्व मण्डलिया ।
थणया तह दुग्गयचिन्तियं व हियए न मायन्ति ॥ ३०१ ॥

असुहा खलो व्व कुडिला मज्झं से किविणदाणसारिच्छा ।
थणया सप्पुरिसमणोरह व्व हियए न मायन्ति ॥ ३०२ ॥

तुलओ व्व समा मित्तो व्व संगया उवओ व्व अक्खलिया ।
सुयणो व्व सत्थहावा सुहडो व्व समुट्ठिया थणया ॥ ३०३ ॥

समउत्तुङ्गविसाला उम्मन्थियकणयकलससङ्काभा ।
कामनिहाणो व्व थणा पुण्णविहूणाण दुप्पेच्छा ॥ ३०४ ॥

उत्तुङ्गघणनिरन्तर पम्हाइयमाउलिङ्गसारिच्छा ।
मारन्ति वासभूमिय — नहो व्व विज्जुज्जला थणया ॥ ३०५ ॥

उव्विम्बे थणहारे रेहइ बालाए घोलिरो हारो ।
हिमगिरिवरसिहराओ खलिओ गङ्गापवाहो व्व ॥ ३०६ ॥

मग्गं चिय अलहन्तो हारो पीणुन्नयाण थणयाणं ।
उव्विम्बो भमइ उरे जउणानइफेणपुञ्जो व्व ॥ ३०७ ॥

*वक्रैः प्रियः सरलैः सज्जन ऋजुभिर्मध्यस्थः।*
आतायै रिपवो नयनानि चतुर्विधानि भवन्ति ॥ १९८ ॥

नयनयोः पततु वज्रमथवा वज्रादधिकं किमपि।
अज्ञातजनेऽपि दृष्टेऽनुरागं ये प्राप्नुतः ॥ १९९ ॥

धावतस्तन्मुखं धाविते ऽपि वलिते तस्मिन्वलति।
जनसंकुलेऽपि नर्तिते तेनास्मन्नयने ॥ २०० ॥

## स्तनपद्धतिः।

स्तब्धौ खल इव सुजन इव संगतौ नरपतिरिव मण्डलितौ।
स्तनौ तथा दुर्गतचिन्तेव हृदये न मातः ॥ २०१ ॥

अमुखौ खल इव कुटिलौ मध्येऽस्याः कृपणदानसदृशौ।
स्तनौ सत्पुरुषमनोरथा इव हृदये न मातः ॥ २०२ ॥

तुलेव समौ मित्रमिव संगतावुन्नतमिवास्खलितौ।
सुजन इव सत्त्वभावौ सुभट इव समुत्थितौ स्तनौ ॥ २०३ ॥

समोत्तुङ्गविशालौ दग्धकनककलशसङ्काशौ।
कामनिधानमिव स्तनौ पुण्यविहीनानां दुःप्रेक्ष्यौ ॥ २०४ ॥

उत्तुङ्गघननिरन्तरौ पक्वीकृतमातुलिङ्गसदृशौ।
मारयतो वर्षभूषितनभ इव विद्युदुज्ज्वलौ स्तनौ ॥ २०५ ॥

उत्कूटे स्तनभारे राजते बालाया घूर्णमानो हारः।
हिमगिरिवरशिखरात्स्खलितो गङ्गाप्रवाह इव ॥ २०६ ॥

मार्गमेवालभमानो हारः पीनोन्नतयोः स्तनयोः।
भीतो भ्रमत्युरसि यमुनानदीफेनपुञ्ज इव। २०७ ॥

अज्झाए नीलकञ्चुय — भरिउव्वरियं विहाइ थणवट्ठं ।
जलभरियजलहरन्तर — दरुग्गओ चन्दबिम्बो व्व ॥ २०८ ॥

अमया मओ व्व समया सप्ति व्व हरिकरिसिरो व्व चञ्चलया ।
किविणधणत्थणविमुहा पसयच्छि पओहरा तुज्झ ॥ २०९ ॥

अव्वो न हुन्ति थणया अज्जुसरीरे सवत्तिणा जाया ।
आलिङ्गणे वि पत्ते दूरे वि पियं निवारेन्ति ॥ २१० ॥

थणजुयलं तीए निरन्तरं पि दट्ठूण तारिसं पडियं ।
मा करउ को वि गव्वं एत्थ असारम्मि संसारे ॥ २११ ॥

कह नाम तीए तं तह सहावगरुओ वि थणहरो पडिओ ।
अहवा महिलाण चिरं हियए को नाम संठाइ ॥ २१२ ॥

## लावण्णवज्जा ।

पल्लवियं करयलपल्लवेहि पप्फुल्लियं व नयणेहिं ।
फलियं मिव पीणपओहरेहि अज्झाए लायण्णं ॥ २१३ ॥

तह चम्पिऊण भरिया विहिणा लायण्णएण तणुयङ्गी ।
जह से चिहुरतरङ्गा अङ्गुलिमग्गो व्व दीसन्ति ॥ २१४ ॥

अन्नं लडहत्तणयं अन्न च्चिय कावि वाउल्लयच्छाया ।
सामा सामन्नपया — वइणो रेह च्चिय न होइ ॥ २१५ ॥

करचरणगण्डलोयण — बाहुलयाजहणमण्डलुद्धरियं ।
अङ्गेसु अमायन्तं रङ्खोलइ तीए लायण्णं ॥ २१६ ॥

सामा नियम्बगरुया थणजहणुव्वहणमन्दसंचारा ।
लक्खिज्जइ मयणनराहिवस्स संचारिणि कुडि व्व ॥ २१७ ॥

प्रौढयुवत्या नीलकञ्चुकस्थगितोद्वरितं विभाति स्तनपट्टं।
जलभृतजलधरान्तरदरोद्गतं चन्द्रबिम्बमिव ॥ ३०८ ॥

अस्तृतौ (असदृशौ) मृग इव समदौ (सम्मृगौ) अग्रीव हरिकरिगिर इव चक्रलौ।
कृपणाभ्यर्थनविमुखौ मृगाक्षि पयोधरौ तव ॥ ३०९ ॥

अहो न भवत: स्तनौ मध्यशरीरे सपत्न्यौ जातौ।
आलिङ्गनेऽपि प्राप्ते दूरेऽपि प्रियं निवारयत: ॥ ३१० ॥

स्तनयुगलं तस्या निरन्तरमपि दृष्ट्वा तादृशं पतितं।
मा करोतु कोऽपि गर्वमस्मिन्नसारे संसारे ॥ ३११ ॥

कथं नाम तस्यास्तत्तथा स्वभावगुरुरपि स्तनभर: पतित:।
अथवा महिलानां चिरं हृदये को नाम संतिष्ठति ॥ ३१२ ॥

## लावण्यपद्धतिः।

पल्लवितं करतलपल्लवै: प्रफुल्लितमिव नयनाभ्यां।
फलितमिव पीनपयोधराभ्यां तरुण्या लावण्यं ॥ ३१३ ॥

तथा चर्चिता भृता विधिना लावण्येन तन्वङ्गी।
यथास्याश्चिकुरतरङ्गा अङ्गुलिमार्ग इव दृश्यन्ते ॥ ३१४ ॥

अन्यल्लवहलमन्यैव कापि बाहुलताच्छाया।
श्यामा सामान्यप्रजापते रेखैव न भवति ॥ ३१५ ॥

करचरणगण्डलोचनबाहुलताजघनमण्डलोद्धृतं।
अङ्गेष्वमादितस्ततश्चलति तस्या लावण्यं ॥ ३१६ ॥

श्यामा नितम्बगुरुका स्तनजघनोद्वहनमन्दसंचारा।
लक्ष्यते मदननराधिपस्य संचारिणी कुटीव ॥ ३१७ ॥

सेयच्छलेण पेच्छह तणुए अङ्गम्मि से अमायन्तं ।
लावण्णं ओसरइ व्व तिवलिसोवाणपन्तीहिं ॥ ३१८ ॥

## सुरयवज्जा ।

दट्ठूण तरुणसुरयं विविहपलोट्टन्तकरणसोहिल्लं ।
दीवो वि तग्गयमणो गयं पि तेल्लं न लक्खेइ ॥ ३१९ ॥
मरुमरुमार त्ति भणन्तियाए सुरयम्मि केलिसङ्गामे ।
पासट्ठिओ वि दीवो सहसा हल्लप्फलो जाओ ॥ ३२० ॥
सुम्मइ वलयाण रवो नेउरसद्दो वि निब्भरो जाओ ।
कस्स वि धन्नस्स घरे महिला पुरिसत्तणं कुणइ ॥ ३२१ ॥
दट्ठूण रयणिमज्झे बहुविहकरणेहि निब्भरं सुरयं ।
ओधुणइ दीवओ विम्भओ व्व पवणाहओ सीसं ॥ ३२२ ॥
दन्तनहक्खयमहियं निग्घायपडन्तवलयनिग्घोसं ।
वणसीहाण व जुज्झं वुत्तं तं तारिसं सुरयं ॥ ३२३ ॥
सो सुम्मइ वासहरे विवरीयरयाए पोढमहिलाए ।
चलवलयकरप्फालण — कणन्तमणिमेहलासद्दो ॥ ३२४ ॥
न वि तह पढमसमागम — सुरयसुहे पाविए वि परिओसो ।
जह बीयदियहसविलक्खलक्खिए वयणकमलम्मि ॥ ३२५ ॥
सरहसरमणसमप्पण — कलयलिरकणन्तनिहुयसिक्कारं ।
लब्भइ कुलवहुसुरए थक्कओ सयलसोक्खाणं ॥ ३२६ ॥
झणझणइ कणयडोरो तुट्टइ हारो गलन्ति रयणाइं ।
पण्डवभडसङ्गामो आढत्तो पोढमहिलाए ॥ ३२७ ॥

स्वेदच्छलेन प्रेचत तनुकेऽङ्गे तस्या श्रमात् ।
लावण्यमपसरतीव चिवलिसोपानपङ्क्तिभिः ॥ ३१८ ॥

## सुरतपद्धतिः ।

दृष्ट्वा तरुणसुरतं विविधप्रवर्तमानकरणशोभायुक्तं ।
दीपोऽपि तद्गतमना गतमपि तैलं न लक्षयति ॥ ३१९ ॥
महमहमारन्ति भणन्त्याः सुरते केलिसङ्ग्रामे ।
पार्श्वस्थितोऽपि दीपः सहसा कम्पनशीलो जातः ॥ ३२० ॥
श्रूयते वलयानां रवो नूपुरशब्दोऽपि निर्भरो जातः ।
कस्यापि धन्यस्य गृहे महिला पुरुषायितं करोति ॥ ३२१ ॥
दृष्ट्वा रजनीमध्ये बहुविधकरणैर्निर्भरं सुरतं ।
श्रहो धुनोति दीपो विस्मित इव पवनाहतः शिरः ॥ ३२२ ॥
दन्तनखचतमहितं निर्घातपतद्वलयनिर्घोषं ।
वनमिंहयोरिव युद्धं वृत्तं तं तादृशं सुरतं ॥ ३२३ ॥
श्रहो श्रूयते वामगृहे विपरीतरतायाः प्रौढमहिलायाः ।
चलद्वलयकरास्फालनक्कणन्मणिमेखलाशब्दः ॥ ३२४ ॥
नापि तथा प्रथमसमागमसुरतसुखे प्राप्तेऽपि परितोषः ।
यथा द्वितीयदिवसे सविलचलचिते वदनकमले ॥ ३२५ ॥
सरभसरमणसमर्पणकलकलशीलक्कणन्मिश्रितशीत्कारं ।
लभ्यते कुलवधूसुरते समूहः सकलसौख्यानां ॥ ३२६ ॥
झणझणायते कनककाञ्ची त्रुट्यति हारो गलन्ति रत्नानि ।
पाण्डवभटसङ्ग्राम श्रारब्धः प्रौढमहिलायाः ॥ ३२७ ॥

रेहइ सुरयवसाणे अद्धुक्खित्तो सणेउरो चलणो।
जिणिऊण कामएवं समुब्भिया धयवडाइ व्व ॥ ३२८

## पेम्मवज्जा

*पेम्मं अणाइपरमत्थपयडणं मङ्गमहो व्व बहुभेयं।*
मोहाणुरायजणयं अव्वो किं वन्दिमो निच्चं ॥ ३२९ ॥
आलावणेण उल्लावणेण सङ्गेण कोउहल्लेण।
सोहग्गएहि व पिय – गुणेहि पेम्मं समारुहइ ॥ ३३० ॥
आरम्भो जस्स इमो आसन्नासाससोसियसरीरो।
परिणामो कह होसइ न याणिमो तस्स पेम्मस्स ॥ ३३१ ॥
दाणं न देइ न करेइ चाडुयं कहइ नेय सब्भावं।
दंसणमेत्तेण वि किं पि माणुसं अमयसारिच्छं ॥ ३३२ ॥
जत्थ न उज्जग्गरओ जत्थ न ईसा विसूरणं माणं।
सब्भावचाडुयं जत्थ न त्थि नेहो तहिं न त्थि ॥ ३३३ ॥
दाडिमफलं व पेम्मं एक्के पक्खे य होइ सकसायं।
जाव न बीओ रच्चइ ता किं सङ्करत्तणं कुणइ ॥ ३३४ ॥
न तहा मारेइ विसं खज्जन्तं पलसयं पि कवलेहिं।
जह चक्खुरायरत्तं मारेइ सविब्भमं पेम्मं ॥ ३३५ ॥
अव्वो जाणामि अहं अत्तणहियएण अन्नहिययाइं।
मा को वि कह वि रच्चउ दुक्खुव्वहणाइ पेम्माइं ॥ ३३६ ॥
अदिट्ठे रणरणओ दिट्ठे ईसा विडम्बणा नाह।
होइ न उज्जु व वङ्कं पेम्मं जह चङ्ग कोरस्स ॥ ३३७ ॥

राजते सुरतावसानेऽर्धोत्क्षिप्तः सनूपुरश्चरणः ।
जित्वा कामदेवं समुज्झिता ध्वजपताकेव ॥ ३२८ ॥

## प्रेमपद्धतिः ।

*प्रेमानादिपरमार्थप्रकटनं मधुमथन इव बहुभेदं ।*
मोहानुरागजनकमहो किं वन्दामहे नित्यं ॥ ३२९ ॥
आलापनेनोल्लापनेन सङ्गेन कौतूहलेन ।
सोपानपदैरिव प्रियगुणैः प्रेम समारोहति ॥ ३३० ॥
आरम्भो यस्येदृश आसन्नास्वामशोषितशरीरः ।
परिणामः कथं भविष्यति न जानीमस्तस्य प्रेम्णः ॥ ३३१ ॥
दानं न ददाति न करोति चाटुकं कथयति नैव सद्भावं ।
दर्शनमात्रेणापि किमपि मानुषममृतसदृशं ॥ ३३२ ॥
यत्र नोज्जागरको यत्र नेर्ष्या विसूरणं मानः ।
सद्भावचाटुकं यत्र नास्ति स्नेहस्तत्र नास्ति ॥ ३३३ ॥
दाडिमफलमिव प्रेमैकस्मिन्पक्षे भवति सकषायं ।
यावन्न द्वितीयो (बीजो) रज्यते तावत्किं मधुरत्वं करोति ॥ ३३४ ॥
न तथा मारयति विषं खाद्यमानं पलशतमपि कवलैः ।
यथा चतूरागरक्तं मारयति सविभ्रमं प्रेम ॥ ३३५ ॥
अहो जानाम्यहमात्महृदयेनान्यहृदयानि ।
मा कोऽपि कथमपि रज्यतु दुःखोद्वहनानि प्रेमाणि ॥ ३३६ ॥
अदृष्टे रणरणको दृष्ट ईर्ष्या विडम्बना नाथ ।
भवति नर्जु वा वक्रं प्रेम यथा चञ्चुः कीरस्य ॥ ३३७ ॥

अद्दिट्ठे रणरणओ दिट्ठे ईसा सुहट्ठिए माणं ।
दूरट्ठिए वि दुक्खं पिए जणे भण सुहं कत्तो ॥ ३३८ ॥

ताव च्चिय होइ सुहं जाव न कीरइ पिओ जणो को वि ।
पियसङ्गो जेहि कओ दुक्खाण समप्पिओ अप्पा ॥ ३३९ ॥

दूरं गए वि कयविप्पिए वि अन्नत्थ बद्धराए वि ।
जत्थ मणं न नियत्तइ तं पेम्मं परिचओ सेसो ॥ ३४० ॥

सो सुवइ सुहं सो दुक्खवज्जिओ सो सुहाण सयखाणी ।
जाए मणेण काएण जस्स न हु वल्लहो को वि ॥ ३४१ ॥

उव्वसउ को वि महिमण्डलम्मि जो तेण न त्थि मंणडिओ ।
खरपवणचाडुचालिर - दवग्गिसरिसेण पेम्मेण ॥ ३४२ ॥

सो को वि न दीसइ मामलज्जि एयम्मि दड्ढजियलोए ।
जस्स समप्पिवि हिययं सुहेण दियहा गमिज्जन्ति ॥ ३४३ ॥

अव्वो तहिं तहिं च्चिय गयणं भमिऊण वीसमन्तेण ।
बोहित्थवायसेण व हमाविया दड्ढपेम्मेण ॥ ३४४ ॥

जाए माणप्पसरे फिट्टे नेहे गयम्मि सब्भावे ।
अब्भत्थणाए पेम्मं कीरन्तं केरिसं होइ ॥ ३४५ ॥

अइदंसणेण अदंसणेण दिट्ठे अणालवन्तेण ।
माणेण पवसणेण व पञ्चविहं झिज्जए पेम्मं ॥ ३४६ ॥

अइदंसणेण बालय सुट्ठु वि नेहाणुबद्धमणसाणं ।
हत्थउडपाणियाइ व कालेण गलन्ति पेम्माणि ॥ ३४७ ॥

पेम्मस्स विरोहियसंधियस्स पच्चक्खदिट्ठविलियस्स ।
उययस्स व ताविय सीयलस्स विरसो रसो होइ ॥ ३४८ ॥

अदृष्टे रणरणको दृष्ट ईर्ष्या सुखस्थिते मानः।
दूरस्थितेऽपि दुःखं प्रिये जने भण सुखं कुतः॥ ३३८॥
तावदेव भवति सुखं यावन्न क्रियते प्रियो जनः कोऽपि।
प्रियसङ्गो यैः कृतो दुःखेभ्यः समर्पित आत्मा॥ ३३९॥
दूरं गतेऽपि कृतविप्रियेऽप्यन्यच्च बद्धरागेऽपि।
यत्र मनो न निवर्तते तत्प्रेम परिचयः शेषः॥ ३४०॥
स स्वपिति सुखं स दुःखवर्जितः स सुखानां शतखानिः।
वाचि मनसा कायेन यस्य न खलु वल्लभः कोऽपि॥ ३४१॥
उल्लपतु कोऽपि महीमण्डले यस्तेन नास्ति संनटितः।
खरपवनचाटुचालनशीलदत्ताग्निसदृशेन प्रेम्णा॥ ३४२॥
स कोऽपि न दृश्यते श्यामलाङ्गितस्निग्धदग्धहतलोके।
यस्य समर्प्य हृदयं सुखेन दिवसा गम्यन्ते॥ ३४३॥
अहो तत्र तत्रैव गगनं भ्रान्त्वा विश्रमता।
प्रवहणवायसेनेव हासिता दग्धप्रेम्णा॥ ३४४॥
जाते मानप्रसरे भ्रष्टे स्नेहे गते सद्भावे।
अभ्यर्थनया प्रेम क्रियमाणं कीदृग्भवति॥ ३४५॥
अदर्शनेनातिदर्शनेन दृष्टेऽनालपता।
मानेन प्रवसनेन वा पञ्चविधं चीयते प्रेम॥ ३४६॥
अदर्शनेन बालक सुष्ठ्वपि स्नेहानुबद्धमनसोः।
हस्तपुटपानीयानीव कालेन गलन्ति प्रेमाणि॥ ३४७॥
प्रेम्णो विरोधितसंधितस्य प्रत्यक्षदृष्टव्यलीकस्य।
उदकस्येव तापितशीतलस्य विरसो रसो भवति॥ ३४८॥

ताव य पुत्ति कइल्लो जाव न पेम्मस्स गोयरे पडइ ।
नेहेण नवरि केयत्तणस्स मूला खणिज्जन्ति ॥ ३४९ ॥

## माणवज्जा ।

अलियपयम्पिरि अणिमित्तकोवणे असुणि सुणसु मह वयणं ।
एक्कग्गाहिणि मोक्खेक्कबन्धवं गलइ तारुण्णं ॥ ३५० ॥
अग्घाहि मङ्कं दे गेण्ह चन्दणं असुणि सुणसु मह वयणं ।
माणेण मा नडिज्जसु माणंसिणि गलइ कुणराई ॥ ३५१ ॥
ए दइए मह पसिज्जसु माणं मोत्तूण कुणसु परिओसं ।
कयसेहराण सुम्मइ आलावो झत्ति गोसम्मि ॥ ३५२ ॥
निद्दाभङ्गो आवण्डुरत्तणं दीहराय नीसासा ।
जायन्ति जस्स विरहे तेण समं केरिसो माणो ॥ ३५३ ॥
नइपूरसच्छहे जोव्वणम्मि दियहेसु निच्चपहिएसु ।
अणियत्तासु वि राईसु पुत्ति किं दड्ढमाणेण ॥ ३५४ ॥
जइ माणो कीस पिओ अहव पिओ कीस कीरए माणो ।
माणिणि दोवि गइन्दा एक्कक्खम्भे न बज्झन्ति ॥ ३५५ ॥
माणिणि मुएसु माणं जइ वि पिओ सुट्ठु वल्लहो तुज्झ ।
कारणवसेण कूवो न नमइ मुद्धे तुला नमइ ॥ ३५६ ॥
माणं अवलम्बन्तो मरिहिसि मुद्धे वसन्तमासम्मि ।
माणो पुणो वि किज्जइ कणदियहा दुल्लहा हुन्ति ॥ ३५७
मा पुत्ति कुणसु माणं दइओ हिययम्मि निठुरसहावो ।
कन्दलिसरिसं पेम्मं ठसत्ति तुट्टं न संघडइ ॥ ३५८ ॥

तावदेव पुत्रि विदग्धो यावन्न प्रेम्णो गोचरे पतति ।
स्नेहेन केवलं क्रकचस्य मूलानि खन्यन्ते ॥ ३४८ ॥

## मानपद्धतिः ।

अलीकप्रजल्पनशीलेऽनिमित्तकोपनेऽनाकर्णनशील आकर्णय मम व-
एकाग्राहिणि सौख्यैकबान्धवं गलति तारुण्यं ॥ ३५० ॥ [चनं ।
आजिघ्र मधुं हे गृहाण चन्दनमनाकर्णनशीले शृणु मम वचनं ।
मानेन मा नदेर्मनस्विनि गलति क्षणरात्रौ ॥ ३५१ ॥
हे दयिते मह्यं प्रमोद मानं मुक्त्वा कुरु परितोषं ।
कुक्कुटानां शृणुत आलापो झटिति प्रभाते ॥ ३५२ ॥
निद्राभङ्ग आपाण्डुरत्वं दीर्घाश्च निःश्वासाः ।
जायन्ते यस्य विरहे तेन समं कीदृग्मानः ॥ ३५३ ॥
नदीपूरसदृशे यौवने दिवसेषु नित्यपथिकेषु ।
अनिवृत्तास्वपि रात्रिषु पुत्रि किं दग्धमानेन ॥ ३५४ ॥
यदि मानः किं प्रियोऽथवा प्रियः किं क्रियते मानः ।
मानिनि द्वावपि गजेन्द्रावेकस्तम्भे न बध्येते ॥ ३५५ ॥
मानिनि मुञ्च मानं यद्यपि प्रियः सुष्ठु वल्लभस्तव ।
कारणवशेन कूपो न नमति मुग्धे तुला नमति ॥ ३५६ ॥
मानमवलम्बमाना मरिष्यसि मुग्धे वसन्तमासे ।
मानः पुनरपि क्रियते क्षणदिवसा दुर्लभा भवन्ति ॥ ३५७ ॥
मा पुत्रि कार्षीर्मानं दयितो हृदये निष्ठुरस्वभावः ।
कन्दलीसदृशं प्रेम झटिति त्रुटितं न संघटते ॥ ३५८ ॥

दृढनेहनालपरिसंठियस्स सब्भावदलसुयन्धस्स ।
पेम्मुप्पलस्स माए माणतुसारो च्चिय विणासो ॥ ३ ५ ९ ॥
सुय माणं माण पियं पियसरयं जाव वच्चए सरयं ।
सरए सरयं सुरयं च पुत्ति को पावइ अउण्णो ॥ ३ ६ ० ॥
तुङ्गो थिरो विसालो जो रइओ माणपव्वओ तीए ।
सो दइयदिट्ठिवज्जासणिस्स घायं च्चिय न पत्तो ॥ ३ ६ १ ॥
पायवडिओ न गणिओ पियं भणन्तो वि विप्पियं भणिओ ।
वच्चन्तो न निरुद्धो भण कस्स कए कओ माणो ॥ ३ ६ २ ॥
माणम्मि तम्मि किज्जइ जो जाणइ विरहवेयणादुक्खं ।
अणरसियनिव्विसेसे किं कीरइ पत्थरे माणो ॥ ३ ६ ३ ॥
उज्जगिरस्स तणुयत्तणस्स सुसियस्स दीहरससस्स ।
एयाण उरं दाऊण पुत्ति माणं कुणिज्जासु ॥ ३ ६ ४ ॥

## पवसियवज्जा ।

कल्लं किर खरहियओ पवसिहिइ पिओ त्ति सुव्वइ जणम्मि ।
तह वड्ढ भयवइ निसे जह से कल्लं चिय न होइ ॥ ३ ६ ५ ॥
जइ वच्चसि वच्च तुमं को वारइ तुज्झ सुहव जन्तस्स ।
तुह गमणं मह मरणं लिहिय पसत्था कयन्तेण ॥ ३ ६ ६ ॥
जइ वच्चसि वच्च तुमं एण्हिं अवऊहणेण न हु कज्जं ।
पावासियाण मडयं छिविऊण अमङ्गलं होइ ॥ ३ ६ ७ ॥
वसिऊण मज्झ हियए जीयं गहिऊण अज्ज चलिओ सि ।
सहवाससहरविडम्बण गङ्गम्मि गओ न सुज्झिहिसि ॥ ३ ६ ८ ॥

दृढस्नेहनालपरिसंस्थितस्य सद्भावदलसुगन्धस्य।
प्रेमोत्पलस्य मातर्मानतुषार एव विनाशः॥ ३५९॥
मुञ्च मानं मानय प्रियं प्रियसरकं यावद्व्रजति शरत्।
शरदि सरकं सुरतं च पुत्रि कः प्राप्नोत्यपुण्यः॥ ३६०॥
तुङ्गः स्थिरो विशालो यो रचितो मानपर्वतस्तया।
स दयितदृष्टिवज्राशनेर्घातमेव न प्राप्तः॥ ३६१॥
पादयोः पतितो न गणितः प्रियं भणन्नपि विप्रियं भणितः।
व्रजन् निरुद्धो भण कस्य कृते कृतो मानः॥ ३६२॥
माने तस्मिन् क्रियते यो जानाति विरहवेदनादुःखं।
अरसिकनिर्विशेषे किं क्रियते प्रस्तरे मानः॥ ३६३॥
उज्जागरस्य तनुलस्य शोषितस्य दीर्घरुदितस्य।
एतेषामुरो दत्वा पुत्रि मानं कुर्याः॥ ३६४॥

## प्रवसितपद्धतिः।

कल्यं किल खरहृदयः प्रवत्स्यति प्रिय इति श्रूयते जने।
तथा वर्धस्व भगवति निशे यथा तस्य कल्यमेव न भवति॥ ३६५॥
यदि व्रजसि व्रज त्वं को वारयति तव सुभग यान्तस्य।
तव गमनं मम मरणं लिखिता प्रशस्तिः कृतान्तेन॥ ३६६॥
यदि व्रजसि व्रज त्वमिदानीमवगूहनेन न खलु कार्यं।
प्रवसतां सटकं कुप्रामङ्गलं भवति॥ ३६७॥
उषित्वा मम हृदये जीवं गृहीत्वाद्य चलितोऽसि।
सहवासगृहविडम्बन गङ्गायां गतो न शुधिष्यसि॥ ३६८॥

जइ वच्चसि वच्च तुमं   अच्चल गहिओ य कुप्पसे कीस ।
पढमं चिय सो मुच्चइ   जो जीवइ तुह विओएण ॥ ३६८ ॥

न मए दूसं न कयं   अमङ्गलं होन्तु सयलसिद्धीओ ।
विरहग्गिधूमकंडुयाइयाइ पयलन्ति नयणाइं ॥ ३७० ॥

रे ससिवाहणवाहण   मा पवससु एरिसम्मि कालम्मि ।
वेल्लसुयासुयवाहण — घणसद्दो जत्थ उच्छलइ ॥ ३७१ ॥

रे ससिवाहणवाहण   वारिज्जन्तो न ठासि जइ सुहय ।
ता लच्छिवामवामं   अम्हाणं वच्च दाऊण ॥ ३७२ ॥

इय पन्थे मा वच्चसु   गयवइभणियं भुयं पसारेवि ।
पन्थिय पियपयमुद्दा   मइलिज्जइ तुज्झ गमणेण ॥ ३७३ ॥

## विरहवज्जा ।

अज्जं चेय पउत्थो   उज्जागरओ जणस्स अज्जेय ।
अज्जेय हलद्दीपिञ्जराइ गोलाए तूहाइं ॥ ३७४ ॥

अज्जं चेय पउत्थो   अज्जं चिय सुन्नयाइ जायाइं ।
रच्छामुहदेउलचच्चराइ अम्हं च हिययाइं ॥ ३७५ ॥

अज्जं चिय तेण विणा   इमीए आयम्बधवलकसणाइं ।
जावन्नमोत्तियाइ व   दिसासु घोलन्ति नयणाइं ॥ ३७६ ॥

अज्जं गओ त्ति अज्जं   गओ त्ति अज्जं गओ त्ति लिहिरीए ।
पढम च्चिय दियहद्धे   कुड्डो रेहाहि चित्तलिओ ॥ ३७७ ॥

अवहिदियहागमसङ्किरीहिं सहियाहि तीए लिहिरीए ।
दो तिन्नि तह च्चिय चोरियाए रेहा फुसिज्जन्ति ॥ ३७८ ॥

यदि व्रजसि व्रज त्वमस्थले गृहीतस्य कुप्यसि कस्मात्।
प्रथममेव स मुच्यते यो जीवति त्वद्वियोगेन ॥ ३६९ ॥
न मया रुदितं न कृतममङ्गलं भवन्तु सकलमिन्दुयः।
विरहाग्निधूमकटुकीकृते प्रगलतो नयने ॥ ३७० ॥
रे अग्निवाहनवाहन मा प्रवसेदृशे काले।
शैलसुतासुतवाहनघनशब्दो यत्रोच्छलति ॥ ३७१ ॥
रे अग्निवाहनवाहन वार्यमाणो न तिष्ठसि यदि सुभग।
तदा लक्ष्मीवासवासमस्मभ्यं व्रज दत्वा ॥ ३७२ ॥
अस्मिन्नपि मा व्रज गतपतिभणितं भुजं प्रसार्य।
पथिक प्रियपदमुद्रा मलिनीक्रियते तव गमनेन ॥ ३७३ ॥

## विरहपद्धतिः।

अद्यैव प्रोषित उज्जागरो जनस्याद्यैव।
अद्यैव हरिद्रापिञ्जराणि गोदावर्यास्तटानि ॥ ३७४ ॥
अद्यैव प्रोषितोऽद्यैव शून्यानि जातानि।
रथ्यामुखदेवकुलचत्वराण्यस्माकं हृदयानि ॥ ३७५ ॥
अद्यैव तेन विनैतस्या आताम्रधवलकृष्णे।
जात्यन्धमौक्तिके इव दिक्षु घूर्णतो नयने ॥ ३७६ ॥
अद्य गत इत्यद्य गत इत्यद्य गत इति लिखनशीलया।
प्रथम एव दिवसार्धे कुड्यं रेखाभिश्चित्रितं ॥ ३७७ ॥
अवधिदिवसागमशङ्कनशीलाभिः सखीभिस्तस्यां लिखनशीलायां।
द्वे तिस्रस्तथैव चौरिकया प्रोञ्छन्ते ॥ ३७८ ॥

'कइया गओ पिओ' 'पुत्ति अज्ज' 'अज्जेय कइ दिणा होन्ति' ।
'एक्को' 'एहहमेत्तो' भणिउं मोहं गया बाला ॥ ३७९ ॥

तह कह वि कुसुमुक्कत्ते निवट्टइ वम्महो जीयन्ताणं ।
जह फुडियमिप्पिसंपुड – दलं व बीयं न संघडइ ॥ ३८० ॥

विरहेण मन्दरेण व हिययं दुद्धोदहिं व महिऊण ।
उम्मूलियाइ अव्वो अम्ह रयणाइ व सुहाइं ॥ ३८१ ॥

अज्जं पुणा अवहो करेसु मुहमण्डणं पयत्तेण ।
अज्ज समप्पइ विरहो दन्ते त्ति पिए अदन्ते वि ॥ ३८२ ॥

खणमेत्तं संतावो सेओ सीयं तहेय रोमञ्चो ।
अव्वो दूसहणिज्जो पियविरहो सन्निवाओ व्व ॥ ३८३ ॥

उण्हुण्हा रणरणया दुप्पेच्छा दूसहा दुरालोया ।
संवच्छरसयसरिसा पियविरहे दुग्गमा दियहा ॥ ३८४ ॥

मयणाणलसंधुक्किय – नेहिन्धणदूसहदूरपज्जलिओ ।
डहई सहि पियविरहे जलणो जलणो च्चिय वराओ ॥ ३८५ ॥

थोरंसुसलिलसित्तो हियए पज्जलइ पियविओयम्मि ।
विरहो हले हयासो अउव्वजलणो कओ विहिणा ॥ ३८६ ॥

विसहरविसग्गिसंसग्गदूसिओ डहइ चन्दणो डहउ ।
पियविरहे महचोज्जं असयमओ जं ससी डहइ ॥ ३८७ ॥

ओसरसु मयण घेत्तूण जीवियं हरउयासणुच्चरियं ।
पियविरहजलणजालावलीहि सहसत्ति डज्झिहिसि ॥ ३८८ ॥

जेहिं सोहग्गनिही दिट्ठो नयणेहि ते च्चिय रुयन्तु ।
अङ्गाइ अपावियसङ्गमाइ ता कीस झिज्जन्ति ॥ ३८९ ॥

कदा गतः प्रियः पुच्छ्याच्चैव कति दिनानि भवन्ति ।
एकमेतावन्मात्रं भणित्वा मोहं गता बाला ॥ ३७९ ॥
तथा कथमपि कुमुहूर्ते निवर्तते वल्लभो जीवितां ।
यथा स्फुटितशुक्तिसम्पुटदलमिव द्वितीयं न संघटते ॥ ३८० ॥
विरहेण मन्दरेणेव हृदयं दुग्धोदधिमिव मथित्वा ।
उन्मूलितान्यहो ऽस्माकं रत्नानीव सुखानि ॥ ३८१ ॥
अद्य पूर्णो ऽवधिः कुरुष्व मुखमण्डनं प्रयत्नेन ।
अद्य समाप्यते विरहो याते ऽपि प्रियेऽयाते ऽपि ॥ ३८२ ॥
क्षणमात्रं संतापः स्वेदः शीतं तथैव रोमाञ्चः ।
अहो दुःसहनीयः प्रियविरहः सन्निपात इव ॥ ३८३ ॥
उष्णोष्णा रणरणका दुष्प्रेक्ष्या दुःसहा दुरालोकाः ।
संवत्सरशतसदृक्षाः प्रियविरहे दुर्गमा दिवसाः ॥ ३८४ ॥
मदनानिलसंधुक्षितस्नेहेन्धनदुःसहदूरप्रज्वलितः ।
दहति सखि प्रियविरहे ज्वलनो ज्वलन एव वराकः ॥ ३८५ ॥
घोराश्रुसलिलसिक्तो हृदये प्रज्वलति प्रियवियोगे ।
विरहो हले हताशो ऽपूर्वज्वलनः कृतो विधिना ॥ ३८६ ॥
विषधरविषाग्निसंसर्गदूषितो दहति चन्दनो दहतु ।
प्रियविरहे महदाश्चर्यममृतमयो यच्छशी दहति ॥ ३८७ ॥
अपसर मदन गृहीत्वा जीवितं हरकृताशनोच्चरितं ।
प्रियविरहज्वलनज्वालावलीभिः सहसा धक्ष्यसे ॥ ३८८ ॥
याभ्यां सौभाग्यनिधिर्दृष्टो नयनाभ्यां तावेव रुदतां ।
अङ्गान्यप्राप्तसङ्गमानि तावत्कस्मात्क्षीयन्ते ॥ ३८९ ॥

## अणङ्गवज्जा ।

अन्नो को वि सहावो वम्महसिहिणो हला हयासस्स ।
विज्झाइ नीरसाणं हियए सरसाण पज्जलइ ॥ ३९० ॥

दिट्ठी दिट्ठीपसरो पसरेण रई रईए सब्भावो ।
सब्भावेण य नेहो पञ्च वि बाणा अणङ्गस्स ॥ ३९१ ॥

उवरि मज्झं चिय वम्मह पञ्च वि बाणा निसंस रे मुक्का ।
अन्नं उण तरुणिजणं किं हणिहिसि चावलट्ठीए ॥ ३९२ ॥

इच्छानियत्तपसरो कामो कुलबालियाण किं कुणइ ।
सीहो व्व पञ्जरगओ अङ्ग चिय झिज्जइ वराओ ॥ ३९३ ॥

ए कुसुमसरा तुह उज्झिहिन्ति मा भणसु सयण न हु भणियं ।
पियविरहतावतविए मह हियए पक्किवन्तस्स ॥ ३९४ ॥

महुरा मयङ्ककिरणा महुमासो कामिणीण उल्लावो ।
पञ्चमसरस्स गेओ तलवग्गो कामदेवस्स ॥ ३९५ ॥

वम्मह पसंसणिज्जो सि वन्दणिज्जो सि गुणमहग्घो सि ।
गोरी हरस्स देहद्धवासिणी जेण निम्मविया ॥ ३९६ ॥

सच्चं अणङ्ग कोयण्डवावडो सरपहुत्तलक्खो सि ।
तरुणीचलन्तलोयण – पुरओ जइ कुणसि संधाणं ॥ ३९७ ॥

## पुरुसउल्लासवज्जा ।

कह सा न संभलिज्जइ जत्थ वि निवसन्ति पञ्च वत्थूणि ।
वीणावंसालावणि – पारावयकोइलालविअं ॥ ३९८ ॥

कह सा न संभलिज्जइ जा सा अत्तत्तकणयतणुसोहा ।
तिवलीतरङ्गमज्झा हरइ मणं वरमइन्दाणं ॥ ३९९ ॥

## अनङ्गपद्धति।

अन्यः कोऽपि स्वभावो मन्मथशिखिनः सखि हताशस्य।
विध्याति नीरसानां हृदये सरसानां प्रज्वलति ॥ ३९० ॥

दृष्टिर्दृष्टिप्रसरः प्रसरेण रती रत्या सद्भावः।
सद्भावेन च स्नेहः पञ्चापि बाणा अनङ्गस्य ॥ ३९१ ॥

उपरि ममैव मन्मथ पञ्चापि बाणा नृशंस हे मुक्ताः।
अन्यं पुनः तरुणीजनं किं हनिष्यसि चापयष्ट्या ॥ ३९२ ॥

इच्छानिवृत्तप्रसरः कामः कुलबालिकानां किं करोति।
सिंह इव पञ्जरगतोऽङ्गेव चीयते वराकी ॥ ३९३ ॥

हे कुसुमशरास्तव धन्विन्ति मा भण मदन न खलु भणितं।
प्रियविरहतापतप्ते मम हृदये प्रक्षिपतः ॥ ३९४ ॥

मदिरा मृगाङ्ककिरणा मधुमासः कामिनीनामुल्लापः।
पञ्चमस्वरस्य गेयं तत्त्ववर्गः कामदेवस्य ॥ ३९५ ॥

मन्मथ प्रशंसनीयोऽसि वन्दनीयोऽसि गुणमहार्घोऽसि।
गौरी हरस्य देहार्धवासिनी येन निर्मिता ॥ ३९६ ॥

सत्यमनङ्ग कोदण्डव्यापृतः शरप्रभूतलक्षोऽसि।
तरुणीचललोचनपुरतो यदि करोषि संधानं ॥ ३९७ ॥

## पुरुषोल्लासपद्धतिः।

कथं सा न संस्मर्यते यत्रापि निवसन्ति पञ्चवस्तूनि।
वीणावंशालापिनीपारावतकोकिलालपितं ॥ ३९८ ॥

कथं सा न संस्मर्यते या सातप्तकनकतनुशोभा।
चिवलीतरङ्गमध्या हरति मनो वरमतीन्द्राणां ॥ ३९९ ॥

कह सा न संभलिज्जइ जा सा नवनलिणिकोमला बाला
कररुहतणुक्खिप्पन्ती अकाल घणभद्दवं कुणइ ॥ ४०० ॥
कह सा न संभलिज्जइ जा सा घरबारतोरणनिसन्ना ।
हरिणि व्व जूहभट्ठा अच्छइ मग्गं पलोयन्ती ॥ ४०१ ॥
कह सा न संभलिज्जइ जा सा नीसाससोसियसरीरा ।
आसासिज्जइ सा सा जाव न सासा समप्पन्ति ॥ ४०२ ॥

## पियाणुरायवज्जा ।

मुहराओ च्चिय पयडइ जो जस्स पिओ किमेत्थ भणिएण ।
साहेइ अङ्गणं चिय घरस्स अब्भन्तरे लच्छीं ॥ ४०३ ॥
उज्झन्ति कढन्ति ससूससन्ति ओ माए सिमिसिमायन्ति ;
जीवन्ति जीवसेसा जे रमिया पोढमहिलाहिं ॥ ४०४ ॥
कम्पन्ति वलन्ति ससूससन्ति ओ माए सिमिसिमायन्ति ।
अङ्गाइ तस्स पुरओ न याणिमो कह धरिज्जन्ति ॥ ४०५ ॥
नीससिउक्कम्पियपुलइएहि जाणन्ति नच्चिउं धन्ना ।
अम्हारिसीण दिट्ठे पियम्मि अप्पा वि वीसरइ ॥ ४०६ ॥
अच्छउ ता फंससुहं अमयरसाओ वि दूररमणिज्जं ।
दंसणमेत्तेण वि पिययमस्स भण किं न पज्जत्तं ॥ ४०७ ॥
अच्छउ ता लोयणगोयरम्मि पडिएण तेण जं सोक्खं ।
आयण्णिए वि पियसहि पिए जणे होइ निव्वाणं ॥ ४०८ ॥
हत्थप्फंसेण वि पिययमस्स जा होइ सोक्खसंपत्ती ।
सा सरभसगाढालिङ्गिए वि इयरे जणे कत्तो ॥ ४०९ ॥

कथं सा न संस्मर्यते या सा नवनलिनीकोमला बाला।
करवलतनुस्पर्शन्त्यकाले घनभाद्रपदं करोति ॥ ४०० ॥
कथं सा न संस्मर्यते या सा वरद्वारतोरणनिषण्णा।
हरिणीव यूथभ्रष्टा तिष्ठति मार्गं प्रलोकयन्ती ॥ ४०१ ॥
कथं सा न संस्मर्यते या सा निःश्वासशोषितशरीरा।
आश्वास्यते सा सा यावन्न श्वासाः समाप्यन्ते ॥ ४०२ ॥

## प्रियाणुरागपद्धतिः।

मुखराग एव प्रकटयति यो यस्य प्रियः किमन्न भणितेन।
कथयत्यङ्गणमेव गृहस्याभ्यन्तरे लक्ष्मीं ॥ ४०३ ॥
दह्यन्ते क्वथ्यन्ते समुच्छूसन्त्यहो मातः सिमिसिमायन्ते।
जीवन्ति जीवशेषा ये रमिताः प्रौढमहिलाभिः। ४०४ ॥
कम्पन्ते वलन्ति समुच्छूसन्ति हे मातः सिमिसिमायन्ते।
अङ्गानि तस्य पुरतो न जानीमः कथं धायन्ते ॥ ४०५ ॥
निःश्वसितोत्कम्पितपुलकितैर्जानन्ति नर्तितुं धन्याः।
अस्मादृश्यो दृष्टे प्रिय आत्मापि विस्मर्यते ॥ ४०६ ॥
तिष्ठतु तावत्स्पर्शसुखमस्मतरसादपि दूरं रमणीयं।
दर्शनमात्रेणापि प्रियतमस्य भण किं न पर्याप्तं ॥ ४०७ ॥
आस्तां तावल्लोचनगोचरे पतितेन तेन यत्सुखं।
आकर्णितेऽपि प्रियसखि प्रिये जने भवति निर्वाणं ॥ ४०८ ॥
हस्तस्पर्शेनापि प्रियतमस्य या भवति सौख्यसंपत्तिः।
सा सरभसगाढालिङ्गितेऽपीतरस्मिञ्जने कुतः ॥ ४०९ ॥

ता किं करेमि माए लोयणजुयलस्स हयसहावस्स ।
एक्कं मोत्तूण पियं लक्खेवि न लक्खए लक्खं ॥ ४१० ॥
ता किं करेमि पियसहि पियस्स मोहग्गभारभमिरस्स ।
रायङ्गणं व खुब्भइ जस्स घरं दूरसंघेहिं ॥ ४११ ॥
तह तेण वि सा दिट्ठा तीए तह तस्स पेमिया दिट्ठी ।
जह दोण्ह वि समयं चिय निव्वत्तरयाइ जायाइं ॥ ४१२ ॥

## दूईवज्जा ।

दूइ तुमं चिय कुसला कक्खडमउयाइ जाणसे वोत्तुं ।
कण्डुइयपण्डुरं जह न होइ तह तं कुणिज्जासु ॥ ४१३ ॥
कित्तियमेत्तं एयं एसावत्थाउ सहि सरीरस्स ।
महिला महिलाण गई जं जाणसि तं कुणिज्जासु ॥ ४१४ ॥
जं तुह कज्ज भण तं मह त्ति जं जाणिउं भणेज्जासु ।
ओ दूइ सच्चवयणेण तं मि पारं गया अज्ज ॥ ४१५ ॥
तिलयं विलयं विवरीयकञ्चुयं सेयभिन्नसव्वङ्गं ।
पडिवयणं अलहन्ती दूई कलिऊण सा हसिया ॥ ४१६ ॥
जइ सो न एइ गेहं ता दूइ अहोमुही तुमं कीस ।
सो होही मज्झ पिओ जो तुज्झ न खण्डए वयणं ॥ ४१७ ॥
दूइ समागमसेउल्लथक्कि दरहसियसिचयधम्मिल्ले ।
थणजहणकवोलनहक्खएहि नाया सि जह पडिया ॥ ४१८ ॥
इय रक्खमाण वि फुडं दूइ न खज्जन्ति दूइया लोए ।
अह एरिसी अवत्था गयाण अम्हं वसे जाया ॥ ४१९ ॥

ततः किं करोमि मातर्लोचनयुगलस्य हतस्वभावस्य।
एकं मुक्त्वा प्रियं लक्षयित्वा न लक्षयति लक्षं ॥ ४१० ॥
ततः किं करोमि प्रियसखि प्रियस्य सौभाग्यभारभ्रमणशीलस्य।
राजाङ्गणमिव क्षुभ्यते यस्य गृहं दूतिसंघैः ॥ ४११ ॥
तथा तेनापि सा दृष्टा तया तथा तस्य प्रेषिता दृष्टिः।
यथा द्वयोरपि सममेव निर्वृत्तरतानि जातानि ॥ ४१२ ॥

## दूतीपद्धतिः।

दूति त्वमेव कुशला कठिनमृदूनि जानासि वक्तुं।
कण्डूयितपाण्डुरं यथा न भवति तथा कुर्याः ॥ ४१३ ॥
कियन्मात्रमेतद्देषावस्था हे सखि शरीरस्य।
महिला महिलानां गतिर्यज्जानासि तत्कुर्याः ॥ ४१४ ॥
यत्तव कार्यं भण तन्मह्यं यज्ज्ञातुं भणेः।
हे दूति सत्यवचनेन त्वमसि पारं गताद्य ॥ ४१५ ॥
तिलकं विलयं गतं विपरीतकञ्चुकं खेदभिन्नसर्वाङ्गं।
प्रतिवचनमलभमाना दूती कलयित्वा सा हसिता ॥ ४१६ ॥
यदि स नैति गेहं ततो दूत्यधोमुखी त्वं किं।
स भविष्यति मम प्रियो यस्तव न खण्डते वचनं (वदनं) ॥ ४१७ ॥
दूति समागमखेदार्द्राङ्गीषत्स्रस्तसिचयश्लथकेशपाशे।
स्तनजघनकपोलनखक्षतैर्ज्ञातासि यथा पतितासि ॥ ४१८ ॥
एवं राक्षसानामपि स्फुटं दूति न खादन्ते दूतिका लोके।
अपेदृश्यवस्था गतानामस्माकं वशे जाता ॥ ४१९ ॥

अच्छउ ताव सविब्भम—कडक्खविक्खेवजम्पिरी दूई ।
तग्गामकुडिल्लसुणहिल्लया वि दिट्ठा सुहावेइ ॥ ४२० ॥
वेल्लहलालाववियक्खणाउ अउयणपउत्तिहरणाओ ।
सो रण्णो नो गामो जत्थ न दो तिन्नि दूईओ ॥ ४२१ ॥

## ओलुग्गावियवज्जा ।

तुह गोत्तायण्णणवियडरमणपज्झरियरसजलेणं व ।
रइमन्दिरम्मि बाला अब्भुक्खन्ती परिब्भमइ ॥ ४२२ ॥
तुह सङ्गमदोहलिणीए तीए सोहग्गविब्भियामाए ।
नवसियसयाइ देन्तीए सुहयदेवा वि न हु पत्ता ॥ ४२३ ॥
तुह अन्नेसणकज्जम्मि सुहय सा हरिणवियसियक्खोला ।
जं जत्थ न त्थि तं तत्थ मग्गमाणी चिरं भमिया ॥ ४२४ ॥
अगणियसेसजुवाणा बालय वोलीणलोयमज्जाया ।
अह सा भमइ दिसामुह—पसारियच्छी तुह कएण ॥ ४२५ ॥
नयणाइ तुह विओए घोलिरबाहाइ सुहय तणुईए ।
हिययट्ठियसोयहुयासधूमभरियाइ व गलन्ति ॥ ४२६ ॥
वहमग्गपेसियाइं तीए नयणाइ तम्मि वोलीणे ।
अज्ज वि गलन्ति पडिलग्गकण्टयाइ व्व ओ सुहय ॥ ४२७ ॥
संभरिऊण य रुण्णं तीए तुमं तह विमुक्कपुक्कारं ।
निद्दय जह सुचियस्स वि जणस्स ओ निवडिओ बाहो ॥ ४२८ ॥
एक्केक्कमवइवेढिय—विवरन्तरतरलदिन्ननयणाए ।
तए वोलन्ते बालय पञ्जरसउणाइयं तीए ॥ ४२९ ॥

आस्तां तावत्सविभ्रमकटाक्षविक्षेपजल्पनशीला दूती
तद्ग्रामकूटश्चुनकापि दृष्टा सुखयति ॥ ४२० ॥
विकसद्दालापविचक्षणा असतीप्रवृत्तिहारिण्यः ।
तदरण्यं न ग्रामो यत्र न द्वे तिस्रो दूत्य ॥ ४२१।

## अवरुग्णपद्धतिः ।

त्वद्गोत्राकर्णनविकटरमणप्रस्तुतरसजलेनेव ।
रतिमन्दिरे बालाभ्युचन्ती परिभ्रमति ॥ ४२२ ॥
तव संगमदोहदवत्या तया सौभाग्यविजृम्भिताशया ।
उपयाचितकशतानि दत्त्वा सुभगद्व्यपि न खलु प्राप्ता ॥ ४२३ ।
तवान्वेषणकार्ये सुभग सा हर्षविकसितकपोला ।
यद्यत्र नास्ति तत्तत्र मार्गयन्ती चिरं भ्रमिता ॥ ४२४ ॥
अगणितशेषयुवजना बालकातिक्रान्तलोकमर्यादा ।
अथ सा भ्रमति दिक्मुखप्रसारिताक्षी त्वत्कृते ॥ ४२५॥
नयने त्वद्वियोगे प्रसारितबाष्पे सुभग तन्व्याः ।
हृदयस्थितशोकहुताशधूमभृत इव गलतः ॥ ४२६ ॥
वृतिमार्गप्रेषिते तस्या नयने तस्मिन्नतिक्रान्ते ।
अद्यापि गलतः प्रतिलग्नकण्टके इव हे सुभग ॥ ४२७॥
संस्मृत्य च रुदितं तया त्वां तथा विमुक्तफूत्कारं ।
निर्दय यथा सुखितस्यापि जनस्याहो निपतितो बाष्पः ॥ ४२८।
एकैकवृतिवेष्टितविवरान्तरतरलदत्तनयनया ।
त्वय्यतिक्रान्ते बालक पञ्जरशकुनिवदाचरितं तया ॥ ४२९ ॥

नयणब्भन्तरघोलन्तबाहभरमन्थराए दिट्ठीए ।
पुणरुत्तपेच्छिरीए बालय ता किं न भणिओ सि ॥ ४३० ॥
सुहय गयं तुह विरहे तिस्सा हिययं पि वेविरं अज्ज ।
करिचलणचम्पणुच्छलियतुच्छतोयं मिव दिसासु ॥ ४३१ ॥
सा तइ सहत्थदिन्नं अज्ज वि ओ सुहय गन्धरहियं पि ।
उव्वसियनयरघरदेवय व्व ओमालयं वहइ ॥ ४३२ ॥
तह झीणा तुह विरहे अणुदियहं सुन्दरङ्ग तणुयङ्गी ।
जह सिढिलवलयनिवडण–भएण उब्भियकरा भमइ ॥ ४३३ ॥
तुह विरहताविया तिस्सा बालाए थणहरोच्छङ्गे ।
दिज्जन्ती अणुदियहं मुणालमाला छमच्छमइ ॥ ४३४ ॥
सा तुज्झ कए गयमय–विलेवणा तह वणेक्कसाहारा ।
जाया निदुय जाया मासाहारा पुलिन्दि व्व ॥ ४३५ ॥
हत्थट्ठियं कवालं न मुयइ नूणं खणं पि खट्टङ्गं ।
सा तुह विरहे बालय बाला कावालिणी जाया ॥ ४३६ ॥
तह झीणा जह मउलिय–लोयणउडविहडणे वि असमत्था ।
सक्किहिइ दुक्करं घर–गयं पि दट्ठुं तुमं बाला ॥ ४३७ ॥
नाहं दूई न तुमं पिओ त्ति को एत्थ मज्झ वावारो ।
सा मरइ तुज्झ अजसो त्ति तेण धम्मक्खरं भणिमो ॥ ४३८ ॥
बहुसो वि कहिज्जन्तं तुह वयणं मज्झ हत्थसंदिट्ठं ।
न सुयं ति जम्पमाणी पुणरुत्तसयं कुणइ अज्जा ॥ ४३९ ॥

नयनाभ्यन्तरघोलद्बाष्पभरमन्थरया दृष्ट्या।
पुनः पुनः प्रेक्षणशीलया बालक ततः किं न भणितोऽसि ॥४३०॥
सुभग गतं तव विरहे तस्या हृदयं वेपनशीलमद्य।
करिचरणाक्रमणोच्छालिततुच्छतोयमिव दिक्षु ॥४३१॥
सा त्वया स्वहस्तदत्तामद्याप्यहो सुभग गन्धरहितामपि।
उद्वासितनगरगृहदेवतेव निर्माल्यकं वहति ॥४३२॥
तथा क्षीणा त्वद्विरहेऽनुदिवसं सुन्दराङ्ग तन्वङ्गी।
यथा शिथिलवलयनिपतनभयेनोर्ध्वीकृतकरा भ्राम्यति ॥४३३॥
त्वद्विरहतापितायास्तस्या बालायाः स्तनभरोत्सङ्गे।
दीयमानानुदिवसं मृणालमाला क्रमच्छमायते ॥४३४॥
सा त्वत्कृते गतमदविलेपना (गजमदं) तथा पानीयैकसाहारा।
(वनैकसाधारा)
जाया निर्दय जाता मासाहारा (मांसाहारा) पुलिन्दीव ॥४३५॥
हस्तस्थितं कपालं न मुञ्चति नूनं क्षणमपि खट्टायामङ्गं (खट्टाङ्गं)।
सा त्वद्विरहे बालक बाला कापालिनी जाता ॥४३६॥
तथा क्षीणा यथा मुकुलितलोचनपुटविघटनेऽप्यसमर्था।
शक्नोति दुष्करं गृहगतमपि द्रष्टुं त्वां बाला ॥४३७॥
नाहं दूती न त्वं प्रिय इति कोऽत्र मम व्यापारः।
सा म्रियते तवायश इति तेन धर्माक्षरं भणामः ॥४३८॥
बहुशोऽपि कथ्यमानं तव वचनं मम हस्तसंदिष्टं।
न श्रुतमिति जल्पमाना पुनरुक्तशतं करोत्यर्था ॥४३९॥

## पवसियवज्जा ।

मज्झण्हपत्थियस्स वि　गिम्हे पहियस्स हरइ संतावो ।
हिययट्ठियजायामुह-मयङ्कजोण्हाजलप्पीलो ॥ ४४० ॥
मा उण्हं पियसु जलं　विरहिणिविरहाणलेण संतत्तं ।
एत्थ सरे ए पन्थिय　गयवइवङ्कयाउ मज्जिया ॥ ४४१ ॥
को देसो उव्वसिओ　को वसिओ सुहय जत्थ चलिओ सि ।
ओ पहिय पन्थदीवय　पुणो तुमं कत्थ दीसिहिसि ॥ ४४२ ॥
दिट्ठो सि जेहि पन्थिय　जेहि न दिट्ठो सि बे वि ते मुसिया ।
एक्काण हिययहरणं अन्नाण वि निप्फलं जम्मं ॥ ४४३ ॥
खरपवणचाडुचालिर-कण्ठट्ठियदिन्नकप्पडो पहिओ ।
दइयादंसणतुरिओ　अद्धड्डीणो व्व पडिहाइ ॥ ४४४ ॥
दइयादंसणतिण्हालुयस्स पहियस्स चिरनियत्तस्स ।
नयरासन्ने धुक्कोडिया वि हियए न मायन्ति ॥ ४४५ ॥

## धाणवज्जा ।

ते धन्ना गरुयनियम्बबिम्बभारालसाहि तरुणीहिं ।
फुरियाहरदरगग्गर-गिराहि जे संभरिज्जन्ति ॥ ४४६ ॥
ते धन्ना कढिणत्तुङ्गथोरघणवीढभारियङ्गीहिं ।
सब्भावनेहउक्कण्ठिरीहि जे संभरिज्जन्ति ॥ ४४७ ॥
ते धन्ना ताण नमो　ते च्चिय जीवन्ति वम्महपसाया ।
ईसीहसन्तनीवी-उलाहि जे संभरिज्जन्ति ॥ ४४८ ॥
ते धन्ना समयगइन्दलीललीलायरीहि अणवरयं ।
कुणवासरमसहरवयणियाहि जे संभरिज्जन्ति ॥ ४४९ ॥

## प्रवसितपद्धतिः ।

मध्याह्नप्रस्थितस्यापि ग्रीष्मे पथिकस्य हरति संतापः ।
हृदयस्थितजायामुखमृगाङ्कज्योत्स्नाजलोत्पीडः ॥ ४४० ॥

मोष्णं पिब जलं विरहिणीविरहानलेन संतप्तं ।
अत्र सरसि रे पथिक गतपतिवध्वो मज्जिताः ॥ ४४१ ॥

को देश उद्वसितः को वसितः सुभग यत्र चलितोऽसि ।
हे पथिक पान्थदीपक पुनः त्वं कुत्र द्रक्ष्यसे ॥ ४४२ ॥

दृष्टोऽसि यैः पथिक यैर्न दृष्टोऽसि द्वावपि तौ मुषितौ ।
एकेषां हृदयहरणमन्येषामपि निष्फलं जन्म ॥ ४४३ ॥

खरपवनचाटुचालनशीलकण्ठस्थितदत्तकर्पटः पथिकः ।
दयितादर्शनलरितोऽर्धोड्डीन इव प्रतिभाति ॥ ४४४ ॥

दयितादर्शनतृष्णालोः पथिकस्य चिरनिवृत्तस्य ।
नगरासन्ने संशया अपि हृदये न मान्ति ॥ ४४५ ॥

## धन्यपद्धतिः ।

ते धन्या गुरुनितम्बबिम्बभारालसाभिस्तरुणीभिः ।
स्फुरिताधरदरगद्गदगीर्भिर्ये संस्मर्यन्ते ॥ ४४६ ॥

ते धन्याः कठिनोत्तुङ्गविस्तीर्णस्तनपीठभारिताङ्गीभिः ।
सद्भावखेदोत्कण्ठितशीलाभिर्ये संस्मर्यन्ते ॥ ४४७ ॥

ते धन्यास्तेभ्यो नमस्त एव जीवन्ति मन्मथप्रसादतः ।
ईषत्स्रंसमाननीवीव्याकुलाभिर्ये संस्मर्यन्ते ॥ ४४८ ॥

ते धन्याः समदगजेन्द्रलीलालीलाचरन्तीभिरनवरतं ।
चणवासरशशधरवदनाभिर्ये संस्मर्यन्ते ॥ ४४९ ॥

## हिययसंवरणवज्जा ।

झिज्जउ हिययं फुट्टन्तु लोयणा होउ अज्ज मरणं पि ।
मयणाणलो वियम्भउ मा माणं मुञ्च रे हियय ॥ ४५० ॥

हा हियय झीणसाहस वियलियमाहप्पचिन्त भज्जेमि ।
जत्थ गओ न गणिज्जसि तत्थ तुमं बन्धसे नेहं ॥ ४५१ ॥

हा हियय किं किलम्मसि दुल्लहजणगरुयसङ्गमासाए ।
अघडन्तजुत्तिकज्जाणुबन्धकरणे सुहं कत्तो ॥ ४५२ ॥

अप्पच्छन्दपहाविर दुल्लहलाभं जणं विमग्गन्तो ।
आयासं व भमन्तो मुहा वि केणावि खज्जिहिसि ॥ ४५३ ॥

उज्झसि उज्झसु कड्ढसि कड्ढसु अह फुडसि हियय ता फुडसु ।
जेण पुणो न कयाइय अन्नासत्ते मइं कुणसि ॥ ४५४ ॥

## सुघरिणीवज्जा ।

भुञ्जइ भुञ्जियसेसं सुप्पइ सुप्पम्मि परियणे सयले ।
पढमं चेय विबुज्झइ घरस्स लच्छी न सा घरिणी ॥ ४५५ ॥

तुच्छं तरणिं पि घरे घरिणी तह कह वि नेइ वित्थारं ।
जह ते वि बन्धवा जलणिहि व्व थाहं न याणन्ति ॥ ४५६ ॥

दुग्गयघरम्मि घरिणी रक्खन्ती आउलत्तणं पइणो ।
पुच्छियदोहलसद्धा उययं चिय दोहलं कहइ ॥ ४५७ ॥

पत्ते पियपाहुणए मङ्गलवलयाइं विक्किणन्तीए ।
दुग्गयघरिणीकुलबालियाए रोवाविओ गामो ॥ ४५८ ॥

बन्धवमरणे वि हहा दुग्गयघरिणीए वि न तहा रुण्णं ।
अप्पत्तबलिविलक्खे वलहकाए समुड्डीणे ॥ ४५९ ॥

## हृदयसंवरणपद्धतिः ।

खिद्यतु हृदयं स्फुटतां लोचने भवत्वद्य मरणमपि ।
मदनानलो विजृम्भतां मा मानं मुञ्च रे हृदय ॥ ४५० ॥

हा हृदय चीणसाहस विगलितमाहात्म्यचिन्त भज्यसे ।
यत्र गतं न गण्यसे तत्र त्वं बध्नासि स्नेहं ॥ ४५१ ॥

हा हृदय किं क्लाम्यसि दुर्लभजनगुरुसंगमाशया ।
अघटमानयुक्तिकार्यानुबन्धकरणे सुखं कुतः ॥ ४५२ ॥

आत्मच्छन्दप्रधावनशील दुर्लभलाभं जनं विमार्गयत् ।
आकाशमिव भ्रमसुधैव केनापि खादिष्यसे ॥ ४५३ ॥

दह्यसे दह्यस्व क्वथ्यसे क्वथ्यस्वाथ स्फुटसि हृदय तदा स्फुट ।
येन पुनर्न कदाप्यन्यासक्ते मतिं करोषि ॥ ४५४ ॥

## सुगृहिणीपद्धतिः ।

भुङ्क्ते भुक्तशेषं स्वपिति सुप्ते परिजने सकले ।
प्रथममेव विबुध्यते गृहस्य लक्ष्मीर्न सा गृहिणी ॥ ४५५ ॥

तुच्छं व्ययमपि गृहे गृहिणी तथा कथमपि नयति विस्तारं ।
यथा तेऽपि बान्धवा जलनिधिरिव स्ताघं न जानन्ति ॥ ४५६ ॥

दुर्गतगृहे गृहिणी रचन्त्याकुलत्वं पत्युः ।
पृष्टदोहदश्रद्धा उदकमेव दोहदं कथयति ॥ ४५७ ॥

प्राप्ते प्रियप्राघुणके मङ्गलवलयानि विक्रीयमानया ।
दुर्गतगृहिणीकुलबालिकया रोदितो ग्रामः ॥ ४५८ ॥

बान्धवमरणेऽपि हाहा दुर्गतगृहिण्यापि न तथा रुदितं ।
अप्राप्तबलिविलक्षे वल्लभकाके समुड्डीने ॥ ४५९ ॥

असुणियपियमरणाए वायसमुड्डाविरीए घरिणीए ।
रोवाविज्जइ गामो अणुदियहं बहुवेणीए ॥ ४६० ॥
डिम्भाण भुत्तसेसं छुहाकिलन्ता वि देइ दुहियाणं ।
कुलगोरवेण वरईउ रोरघरिणीउ झिज्जन्ति ॥ ४६१ ॥
अहियाइमाणिणो दुग्गयस्स छाहिं पइस्स रक्खन्ती ।
नियबन्धवाण जूरइ घरिणी विहवेण पत्ताणं ॥ ४६२ ॥

## सईवज्जा ।

धण्णेउ अन्धलो सा विलया जा मइ पइं न कामेइ ।
सो को वि जणउ जुवा जस्स मए पेसिया दिट्ठी ॥ ४६३ ।
घरघरिणी पियदंसणा वि तरुणी पउत्थवइया वि ।
असईसइज्झिया दुग्गया वि न हु खण्डियं सीलं ॥ ४६४ ॥
असरिसचित्ते दियरे सुद्धमणा पिययमे विसमसीले ।
न कहइ कुडुम्बविहडण—भएण तणुयायए सुद्धा ॥ ४६५ ॥
घरवावारे घरिणी वेसा सुरयम्मि कुलवहू सुयणे ।
परिणइमज्झम्मि सही विहुरे मन्ति व्व भिच्चो व्व ॥ ४६६
कुलबालियाए पेच्छह जोव्वणलावण्णविब्भमविलासा ।
सव्वे वि अग्गचलिया पियम्मि कयनिच्छए गन्तुं ॥ ४६७ ॥
पुरिसविसेसेण सइत्तणाइ न कुलक्कमेण महिलाणं ।
सग्गं गए वि हाले न मुयइ गोला पइट्ठाणं ॥ ४६८ ॥
इहपरलोयविरुद्धेण कण्णकडुएण गरहणिज्जेण ।
उभयकुलदूसणिज्जेण दूइ किं तेण भणिएण ॥ ४६९ ॥

अज्ञातप्रियमरणया वायसमुड्डापनशीलया गृहिण्या।
रोद्यते ग्रामोऽनुदिवसं बद्धवेण्या ॥ ४६० ॥

डिम्भानां भुक्तशेषं क्षुधाक्रान्तापि ददाति दुःखितेभ्यः।
कुलगौरवेण वराको रङ्कगृहिण्याः क्षीयन्ते ॥ ४६१ ॥

अभिजातिमानिनो दुर्गतस्य छायां पत्यू रक्षन्ती।
निजबान्धवेभ्यः क्रुध्यति गृहिणी विभवेन प्राप्तेभ्यः ॥ ४६२ ॥

## सतीपद्धतिः।

ऊर्ध्वीकरोत्वङ्गुलीं सा वनिता या मम पतिं न कामयते।
स कोऽपि कथयतु युवा यस्य मया प्रेषिता दृष्टिः ॥ ४६३ ॥

चत्वरगृहिणी प्रियदर्शनापि तरुणी प्रोषितपतिकापि।
असतीप्रातिवेश्मिका दुर्गतापि न खलु खण्डितं शीलं ॥ ४६४ ॥

असदृशचित्ते देवरे शुद्धमना प्रियतमे विषमशीले।
न कथयति कुटुम्बविघटनभयेन तनूभवति मुग्धा ॥ ४६५ ॥

गृहव्यापारे गृहिणी वेश्या सुरते कुलवधूः सुजने।
परिणतिमध्ये सखी विधुरे मन्त्रीव भृत्य इव ॥ ४६६ ॥

कुलबालिकायाः प्रेक्षत यौवनलावण्यविभ्रमविलासाः।
सर्वेऽप्यप्रचलिताः प्रिये कृतनिश्चये गन्तुं ॥ ४६७ ॥

पुरुषविशेषेण सतीत्वं न कुलक्रमेण महिलानां।
स्वर्गं गतेऽपि हाले न मुञ्चति गोदावरी प्रतिष्ठानं ॥ ४६८ ॥

इहपरलोकविरुद्धेन कर्णकटुकेन गर्हणीयेन।
उभयकुलदूषणीयेन दूति किं तेन भणितेन ॥ ४६९ ॥

जइ सो गुणाणुराई गुणन्नुओ मह गुणे पसंसेई ।
पढमं चिय जइ असई गुणगणणा का तह च्चेय ॥ ४७० ॥
जइ उत्तमो वि भण्णइ मह पुरओ सो वि सुयणु अणुदियहं ।
भाभि न उत्तमपुरिसा परस्स दाराइ पेच्छन्ति ॥ ४७१ ॥

## असईवज्जा

नियडकुडङ्गं पच्छन्नदेउलं बहुजुवाणसंकिण्णं ।
थेरो पइ त्ति मा रुवसु पुत्ति दिन्ना सि सुगामे ॥ ४७२ ॥
मा रुवसु ओणयमुही धवलायन्तेसु सालिछेत्तेसु ।
हरियालमण्डियमुहा नड व्व सणवाडया जाया ॥ ४७३ ॥
पुव्वेण सणं पच्छेण वञ्जुला दाहिणेण वडविडओ ।
पुत्तिय पुण्णेहि विणा न लब्भए एरिसो गामो ॥ ४७४ ॥
पेच्छह महाणुभोज्जं काणाघरिणीए जं कयं कज्जं ।
चुम्बेवि न लज्ज नयणं झडन्ति नीसारिओ जारो ॥ ४७५ ॥
पउरजुवाणो गामो महुमासो जोव्वणं पई थेरो ।
जुण्णसुरा साहीणा असई [illegible] किं मरउ ॥ ४७६ ॥
देवाण बम्भणाण य पुत्ति पसाएण एत्तियं कालं ।
न हु जाओ अम्ह घरे कइया वि सइत्तणकलङ्को ॥ ४७७ ॥
सट्ठीए होइ सुहवा सएण रम्भत्तणं च पावेइ ।
पुत्ते जारसहस्से इन्दो अद्धासणं देइ ॥ ४७८ ॥
जइ फुडु एत्थ सुयाणं जम्मफलं होइ किं पि अम्हाणं ।
ता तेसु कुडङ्गेसु ह तेण समं तह नु कीलेज्जा ॥ ४७९ ॥

